पञ्चानामपि प्रकाराणामोङ्कारपूर्वकत्वं विहितम्। ह्रां ह्रीं ह्रूं ह्रैं ह्रौम् इति सर्वेषां बीजाक्षराणां पञ्चाक्षरमन्त्रात्पूर्वम्, ओङ्कारादनन्तरं च समावेशे प्रसादपञ्चाक्षरी। बीजाक्षरेष्वन्तिमस्य हाने मायापञ्चाक्षरी। अन्तिमयोर्द्वयोर्हाने सूक्ष्मपञ्चाक्षरी। अन्तिमानां त्रयाणां हाने स्थूलपञ्चाक्षरी। सर्वेषां बीजाक्षराणां हाने मूलपञ्चाक्षरी च। रम्भापुरी, उज्जयिनी, हिमवत्केदारः, श्रीशैलम्, काशी चेति पञ्चपीठानामधिपतयो वीर-नन्दि-भृङ्गि-वृषभ-स्कन्दगोत्राधीशा जगद्गुरवस्तत्परम्परानुयायिन उपाचार्याः क्रमेणैतेषां पञ्चविधमन्त्राणामुपदेशेऽधिकृताः।

चन्द्रज्ञानागमे पञ्चाक्षरस्य मन्त्रस्य स्थूलसूक्ष्मप्रकारौ केवलौ भिन्नस्वरूपेणोक्तौ—

**अ-उ-माश्चैव नादश्च कला चेत्यंशपञ्चकम्।**
**मिलित्वा प्रणवो जज्ञे सूक्ष्मपञ्चाक्षरात्मकः॥**
**तथा नमः शिवायेति स्थूलपञ्चाक्षरो भवेत्**[1] ॥ इति।

अ उ म नादः कला चेति प्रणवस्य पञ्चांशा भवन्ति। तादृशः प्रणवा मिलित्वा सूक्ष्मपञ्चाक्षरो जायते। तथैव 'नमः शिवाय' इति स्थूलपञ्चाक्षरो भवति। **''सूक्ष्मं मूलं भवेदस्य स्थूलं विवरणं मतम्''**[2] इत्युक्तरीत्याऽनयोर्महत्त्वे भेदो नास्ति।

## पञ्चाक्षरस्य पञ्चतत्त्वस्वरूपत्वम्

सूक्ष्मागमोक्तदिशा पञ्चाक्षरमन्त्रः पञ्चतत्त्वात्मकः। तथा हि– पृथिवी, जलम्, तेजः, वायुः, आकाशश्चेति पञ्चमहाभूतानि; गन्धतन्मात्रा, रसतन्मात्रा, रूपतन्मात्रा, स्पर्शतन्मात्रा, शब्दतन्मात्रा चेति तन्मात्रापञ्चकम्; घ्राणः, जिह्वा, नेत्रम्, चर्म, श्रोत्रं चेति पञ्चज्ञानेन्द्रियाणि; वाक्, पाणि, पादः, पायुः, उपस्थश्चेति पञ्चकर्मेन्द्रियाणि; सद्योजातः, वामदेव;, अघोरः, तत्पुरुषः, ईशानश्चेति पञ्चब्रह्माणि; सृष्टिः, स्थितिः, लयः, तिरोधानम्, अनुग्रहश्चेति पञ्चकृत्यानि– एतानि सर्वाणि महतो मन्त्रस्य पञ्चाक्षरस्य पञ्चाक्षरैर्बोध्यानि।[3] किं बहुना, यानि यानि लोके विशेषतः पञ्चविधत्वेन प्रसिद्धानि तानि सर्वाणि पञ्चाक्षरमयानीति बोध्यम्। तथा चोक्तं सूक्ष्मागमे—

**लोके हि पञ्चधा यानि प्रसिद्धानि विशेषतः।**
**ज्ञेयानि तानि सर्वाणि पञ्चाक्षरमयानि हि**[4] ॥ इति।

---

१. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ११.४३-४४।

२. तत्रैव, ११.४५।

३. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ४.५८-५९।

४. तत्रैव, ४.६०।

### षडक्षरमन्त्रस्य षट्तत्त्वस्वरूपत्वम्

सूक्ष्मागमे एव षडक्षरमन्त्रस्य षडक्षराणां यकारादि-ओङ्कारान्तक्रमेण निवृत्तिमार्गतः सुसूक्ष्मं षट्तत्त्वस्वरूपत्वं प्रदर्शितम्। तथा हि– पूर्णता, नित्यता, आनन्दः, चिद्रूपता, सत्यरूपता, मिश्ररूपता चेति षट्तत्त्वरूपाणि; परः, गूढः, शरीरस्य शिवः, लिङ्गम्, अनादिः, महांश्चेत्यपराणि षट्तत्त्वरूपाणि; पराशक्तिः, आदिशक्तिः, इच्छाशक्तिः, ज्ञानशक्तिः, क्रियाशक्तिः, चिच्छक्तिश्चेति षट् शक्तयः; शिवसादाख्यम्, अमूर्तसादाख्यम्, मूर्तसादाख्यम्, कर्तृसादाख्यम्, कर्मसादाख्यम्, महासादाख्यं चेति षट् सादाख्यानि; महालिङ्गम्, प्रसादलिङ्गम्, चरलिङ्गम्, शिवलिङ्गम्, गुरुलिङ्गम्, आचारलिङ्गं चेति षड्लिङ्गानि; ऐक्यस्थलम्, शरणस्थलम्, प्राणलिङ्गिस्थलम्, प्रसादिस्थलम्, माहेश्वरस्थलम्, भक्तस्थलं चेति षट्स्थलानि; सद्भावः, सुज्ञानम्, सुमनाः, निरहङ्कारः, सद्बुद्धिः, सुचित्तं चेति षट् हस्ताः; ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः, सदाशिवः, परशिवश्चेति षड्देवताः। एवं यानि यानि षडात्मकानि भवन्ति, तानि सर्वाणि षडक्षरमन्त्रस्य षडक्षररूपाणि भवन्ति[१]।

स्फटिकवर्णः, श्वेतवर्णः, नीलवर्णः, रत्नवर्णः, पीतवर्णश्चेति पञ्चवर्णरूपाणि यानि षडक्षरमन्त्रस्य यकारादिनकारान्तानि पञ्चाक्षराणि, तानि पृथिवी, जलं, तेजः, वायुः, आकाशश्चेति पञ्चमहाभूततत्त्वानां बीजानि, वर्णातीत ओङ्कारस्तु सर्वतत्त्वानां बीजम्। तेषामेव यादीनामक्षराणां क्रमेण ईशः, महेश्वरः, शिवः, विद्या, आत्मा, परशिवश्चेति तत्त्वतः षड्रूपाणि विद्यन्ते।[२] पुनस्तत्र यकारो वेदसहस्रस्वरूपः, वाकार अथर्ववेदस्वरूपः, शिकारः सामवेदरूपः, मकारो यजुर्वेदस्वरूपः, नकारः ऋग्वेदरूपः, ओङ्कारस्तु सर्वज्ञानस्वरूप इति सर्ववेदमयोऽयं षडक्षरमन्त्रः[३]। अत एवोक्तम्—

**तस्मादशेषवेदानां मन्त्राणां च विशेषतः।**
**मूलबीजमयं मन्त्रश्चिन्तारत्नमिवापरम्[४]**।। इति।

अस्यायमर्थः— सर्वेषां वेदानां सर्वेषां च मन्त्राणां मूलबीजभूतोऽयं षडक्षरमन्त्रश्चिन्तामणिरिव वाञ्छितफलप्रदायको भवति। सारवती चेयमुक्तिः—

**षडात्मकं जगत्सर्वं षडक्षरसमुद्भवम्।**
**स्थीयते लीयते चास्मिन् तस्माद् ब्रह्मात्मको मनुः[५]**।। इति।

---

१. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ४.३७-४७।
२. तत्रैव, ४.४८-५२।
३. तत्रैव, ४.५२।
४. तत्रैव, ४.५३।
५. तत्रैव, ४.५४।

यद् यत् षट्तत्त्वस्वरूपं जगत्, तत्सर्वं षडक्षरमन्त्रादुत्पद्यते, तत्रैव स्थीयते, तस्मिन्नेव लीयते च। अतः स मन्त्रो जगत्सृष्टिस्थितिलयकारणभूतस्य ब्रह्मणः स्वरूपमिति ज्ञेयम्।

### पञ्चाक्षरमन्त्रमहिमा

पञ्चाक्षरमन्त्रस्य षडक्षरमन्त्रस्य च महिमानं प्रत्येकतया वर्णयन्ति। तत्र प्रथमं पञ्चाक्षरमन्त्रस्य महिमा शैवागमोक्तदिशा विमृश्यते। सूक्ष्मागमे पञ्चाक्षर्या माहात्म्यं सम्यङ् निरूपितम्। सप्तकोटिमन्त्रेषु पञ्चाक्षरीमन्त्रस्य श्रेष्ठत्वं तत्रादौ प्रतिपादितम्। शैवमन्त्राणां ये जापका भवन्ति, ते शिवप्रसादेन जन्ममृत्युभयाकुलात् संसारात् समुद्धृता भवन्ति। तत्रापि पञ्चाक्षरीमन्त्रः श्रेष्ठतरो भवति। तथा चोक्तम्—

**मन्त्राणामपि शैवानां मुख्या एकादश स्मृताः।**
**तत्राघोरो महामन्त्रः सर्वाभीष्टप्रदो नृणाम्॥**
**तस्मादपि श्रेष्ठतरा मम पञ्चाक्षरी शिवे।**
**अस्य मन्त्रस्य चैवान्ये उपमन्त्राः प्रकीर्तिताः[१] ॥** इति।

शैवमन्त्रेषु षडङ्गमन्त्राः पञ्चब्रह्ममन्त्राश्चेत्याहत्यैकादशमन्त्रा मुख्या भवन्ति। तेषां मध्येऽघोरमन्त्रः (अघोरेभ्योऽथ घोरेभ्य इत्यादिमन्त्रः) मनुष्याणां सर्वाभीष्टफलप्रदः। तस्मादपि पञ्चाक्षरमन्त्रः श्रेष्ठतरः। अन्ये मन्त्रा अस्य पञ्चाक्षरमन्त्रस्यैवोपमन्त्रा इति संस्तुताः। अस्य मन्त्रस्य महता प्रभावेण वेदधर्माः शाश्वताः सञ्जाताः, इतिहासपुराणानि समस्ताश्चागमाः सर्वलोकोपकारकाः सञ्जाताः, ब्रह्मा, विष्णुः, रुद्रः, देवेन्द्रः, अन्याश्च देवताः, आदित्यादयः सर्वे ग्रहाः, भूर्भुवस्स्वरादयो लोकाः, गन्धर्वाः, किन्नराः, सिद्धाः, अन्ये च देवतात्मानः सनातनाः सम्भूताः। एतावत्प्रभावयुक्तोऽयं पञ्चाक्षरात्मको महामन्त्रः[२]। अयं मन्त्रः सर्वसिद्धिप्रदः सर्वतत्त्वप्रकाशकश्च।[३] अन्यमन्त्रापेक्षयाऽस्य मन्त्रस्य वैशिष्ट्यं वर्तते। तदुक्तम्—

**सूक्ष्मा क्रियाऽधिकफलं सर्वसाधारणं शिवे।**
**विनाऽऽयासेन संसिद्धिः पञ्चाक्षरमहामनोः॥**
**अस्मादायासबहुलाः सर्वे मन्त्राश्च तत्क्रियाः[४] ॥** इति।

---

१. सूक्ष्मागमः, उत्तरभागः, क्रियापादः ३. ५-६।
२. तत्रैव, ३. ७-९।
३. तत्रैव, ३. १०४।
४. तत्रैव, ३. ५९।

अन्ये मन्त्राः सर्वे तत्क्रियाश्चाऽऽयासबहुलाः, परं तु पञ्चाक्षरमहामन्त्र आयासेन विना फलप्रदः, सर्वसाधारणश्च; लिङ्गवर्णादिभेदं विना सर्वेऽस्याधिकारिणः। तत्क्रिया तु सूक्ष्मा, परन्तु अधिकफलदा। एवमेवोक्तं पारमेश्वरागमे- **"तदल्पं वेदसाराख्यं भुक्तिदं च विमुक्तिदम्"**[१] इति। यानि विद्यास्थानानि भवन्ति, तानि सर्वाणि पञ्चाक्षरमन्त्रे विलीयन्ते, पुनस्ततो निर्गच्छन्ति।[२] ये चेमं मन्त्रमाश्रयन्ते, ते कलियुगेऽपि दृढव्रता भूत्वा मुक्तिं प्राप्नुवन्ति[३]।

चन्द्रज्ञानागमोक्तदिशा सदाचारविहीनस्यापि पतितस्यापि रक्षकोऽयं पञ्चाक्षरमन्त्रः। अस्मात् परो न कश्चिन्मन्त्रः। सर्वास्ववस्थासु शिवभक्तिमतोऽयं मन्त्रो निष्फलो न भवति। कस्याप्ययं न शत्रुः सुसिद्धस्याऽसिद्धस्य वा। तथा चोक्तम्—

**सर्वावस्थां गतस्यापि मयि भक्तिमतः सदा।**
**सिद्ध्यत्येष न सन्देहो नापरस्य तु कस्यचित्॥**
**न कदाचन कस्यापि रिपुरेष महामनुः।**
**सिद्धो वाऽथ सुसिद्धो वा साध्यो वाऽथ भविष्यति**[४]॥ इति।

तत्र सिद्धेन गुरुणोपदिष्टो मन्त्रः सुसिद्धः, असिद्धेन गुरुणोपदिष्टः सिद्धः, स्वयमाराधितः साध्यश्चेत्युच्यते। तदुक्तम्—

**सिद्धेन गुरुणादिष्टः सुसिद्ध इति कथ्यते।**
**असिद्धेनापि वा दत्तः सिद्धः साध्यस्तु केवलम्**[५]॥ इति।

सर्वदाऽयं मन्त्रः सफलः। गच्छंस्तिष्ठन्, उपविशन्, स्वस्थः परवशो वा, शान्तो कुपितो वा, स्वेच्छकर्म कुर्वन्, शुचिर्वाऽशुचिर्वा, आचारवाननाचारवान् वा, सर्वोऽपि पञ्चाक्षरीजपस्य फलभाग् भवति।[६] मन्त्रान्तरेषु सिद्धेष्वयं मन्त्रः सिद्ध इति वक्तुं न शक्यते। परं तु महामन्त्रेऽस्मिन् सिद्धे सर्वे मन्त्राः सिद्धा भवन्तीति निश्चितम्। एतावान् महिमाऽस्य मन्त्रस्य[७]।

ारमेश्वरागमे त्विदमुक्तम्- सर्ववेदोक्तिप्रकारेण सर्वकाले सर्वस्थानेषु सर्वदोऽयं

---

१. पारमेश्वरागमः, ११.९।
२. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.७५।
३. तत्रैव, ३.७६।
४. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ८.८७-८८।
५. तत्रैव, ८.८९।
६. तत्रैव, ८.८४-८६; पारमेश्वरागमः, १०.८५-८७।
७. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ८.९२।

पञ्चाक्षरमन्त्र इति । अतस्तं सर्वत्र सर्वदा जपेत् ।[१] यथा लोकेषु कैलासः, देवेषु शङ्करः, मुक्तिपरेषु मतेषु वीरशैवम्, मित्रेषु ज्ञानम्, मुक्तिसाधनेषु भक्तिः, मर्त्येषु शैवश्च श्रेष्ठतया परिगण्यते, तथा मन्त्रेषु पञ्चाक्षरः श्रेष्ठतया निश्चीयते । तथा चोक्तम्—

**न कैलासात् परो लोको न दैवं शङ्करात्परम् ।**
**न वीरशैवाच्च मतं नास्ति मुक्तिपरं सुखम् ।।**
**नास्ति ज्ञानात्परं मित्रं न भक्तेः साधनं परम् ।**
**न शैवादधिको मर्त्यो मन्त्रः पञ्चाक्षरः परः[२] ।।**

यदि शाठ्येनाऽऽलस्येन परिहासेन मायया स्वभावेन वा, येन केनापि प्रकारेण वा शैवः पञ्चाक्षरः सकृदेव स्मर्यते चेत्, शिवस्वरूपं प्राप्यते; किं पुनर्भक्तिपूर्वकमयं मन्त्रो जप्यते चेत्, अस्मिन् मन्त्रे भक्तितो जप्ते सति भुक्तिमुक्तिश्च निःसंशयं प्राप्येते ।[३] पञ्चाक्षरजापको ब्रह्महत्यादिभिः पापैर्मुच्यते । अत्र संशयो नास्ति[४] । एवं शैवागमेषु पञ्चाक्षरस्य माहात्म्यं सम्यगुक्तम् ।

## षडक्षरमन्त्रमहिमा

ओङ्कारपूर्वकत्वे पञ्चाक्षरमन्त्र एव षडक्षरमन्त्रो भवतीत्युक्तम् । षडक्षरमन्त्रस्त्वधिकेनोङ्कारमाहात्म्येन वैशिष्ट्यं प्राप्नोति । ओङ्कारस्य तु माहात्म्यमथर्वशिर उपनिषदि सम्यग् वर्णितम्– "तस्योत्तरतः शिरो दक्षिणतः पादो य उत्तरतः स ओङ्कारो य ओङ्कारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म स एकः स रुद्रः स ईशानः स भगवान् स महेश्वरः स महादेवः"[५] इति । ममोङ्कारमुद्दिश्य पारमेश्वरागमे यदुच्यते, तस्यायं भावः– ओमित्येकाक्षरे मन्त्रे त्रिगुणातीतः सर्वज्ञः सर्वकृत्प्रभुः शिवः विशेषतया स्थितः । शिवः परमात्मा प्रणवस्वरूपेणाऽधिकः । अत एव प्रणवाभ्याससम्भवया भक्त्या तत्स्वरूपं ज्ञातुं शक्यते । शिवरुद्रादिशब्दाः प्रणवपरा एव । प्रणववाच्यस्य शिवस्य भावनात् प्रणवजपाच्च परा सिद्धिः प्राप्यते । नास्त्यस्मिन् विषये संशयलेशोऽपि । तस्मादागमविशारदाः प्रणवमेकाक्षरं देवमाहुरिति ।[६] तत् कीदृशमिति चेत्तत्रैवोच्यते—

---

१. पारमेश्वरागमः, १०.८८ ।
२. तत्रैव, १०.८९-९० ।
३. तत्रैव, १०.९३-९५ ।
४. तत्रैव, १०.९९ ।
५. अथर्वशिरः, ४४ ।
६. पारमेश्वरागमः, २२.१२-२४ ।

**वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः ।**
**ज्ञायते योगिभिर्ध्याने बोधानन्दाव्ययाद्वयः[१] ।।**

अर्थान्मनस्विनो वाच्यं शिवं वाचकमोङ्कारं चैकत्वेन मन्यन्ते। अत ओङ्कारः साक्षात् शिव एव। अयमेवोङ्कारो योगिभिर्ध्यानद्वारा ज्ञानानन्दाव्ययाद्वयतत्त्वरूपेण भाव्यते। एवं ज्ञानानन्दाव्ययाद्वयतत्त्वरूपस्य शिवस्य वाचकत्वेनोङ्कारः परमश्रेष्ठः।

अ-उ-म इति वर्णैर्युक्तः सन् प्रणवस्त्रिवर्णः। ह इति नादस्य योजनया स प्रशस्ततरो भवति। परमात्मनो दक्षिणमुखाद् अकारः, वाममुखाद् उकारः, मध्यममुखात् (ऊर्ध्वमुखात्) मकारः, इति प्रणवघटकानां त्रिवर्णानामुत्पत्तिरुक्ता[२]। एतैः सह हकारयोजनया प्रणवो मोक्षदः सम्पद्यते। तत्राऽकारो ब्रह्मबीजमुकारो विष्णुबीजं मकारो रुद्रबीजं च। तेषां मेलनेन शिवस्य शरीरं सम्पन्नम्[३]। एवमेवाऽकारोकारौ प्रकृतिपुरुषात्मकौ, मकारस्तयोर्द्वयोर्नियन्ता, नादः (हकारः) साक्षात् सदाशिवश्च। अकारोकारमकाराः क्रमेणेच्छाक्रियाज्ञानशक्तिस्वरूपाः, नादः परशिवस्वरूपश्चेत्युच्यते।[४] इत्येवमादिभिर्माहात्म्यांशैः सम्पन्नः प्रणवः साकल्यं शाम्भवं सौख्यं सावश्यं सायुज्यं चेति पञ्चविधो भवति। तत्र अ उ म ह– इति साकल्यप्रणवः, अ उ म ह इ– इति शाम्भवप्रणवः, अ उ म ह ई– इति सौख्यप्रणवः, अ उ म ह ए– इति सावश्यप्रणवः, अ उ म ह औ– इति सायुज्यप्रणवश्च।[५] एतादृशमहिमवतः प्रणवस्य योजनया पञ्चाक्षरमन्त्रः षडक्षरात्मकत्वेन बहु प्राशस्त्यं भजते। तथा चोक्तम्—

**तस्मादिदं समस्तानामादिबीजमुदीरितम् ।**
**अनेन सहितो मन्त्रः सर्वमन्त्रोत्तमोत्तमः[६] ।।** इति।

एतादृशैर्विशेषैर्युक्तत्वात् प्रणवः समस्तानां मन्त्राणामादिबीजमुक्तम्। अनेन सहितो मन्त्रः (षडक्षरः) सर्वस्मान्मन्त्रादुत्तमः। अपि चास्य पूर्वोक्तिदिशा सर्वषट्तत्त्वस्वरूपत्वात् प्रशस्ततमत्वं निश्चितम्।

मन्त्रराजत्वेन परिगृहीत ओङ्कारः पञ्चाक्षरैर्युक्तः सन् सायुज्यकारणं भवति सर्वसिद्धिकरश्च। स सर्वमन्त्रेषु निहितः सन् विद्यानामादिभूतः[७]। इदं च ज्ञेयम्–

---

१. तत्रैव।
२. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ४.६-८.४।
३. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ४.२०।
४. तत्रैव, ४.११-१२।
५. तत्रैव, ४.१९-२४; वातुलशुद्धागमः, ६ प्रणवभेदपटलः, २०-२४।
६. तत्रैव, ४.३४।
७. तत्रैव, ४.५५-५६।

**इदं रहस्यं पापघ्नमात्मज्ञानप्रकाशकम् ।**
**सारात्सारतरं दध्नो नवनीतमिवोद्धृतम् ।।**
**षडक्षरमनुज्ञानं सर्वज्ञानोत्तमोत्तमम्**[१] ।। इति ।

इदं रहस्यभूतं षडक्षरमन्त्रज्ञानं पापहरमात्मज्ञानप्रकाशकं च । यथा नवनीतं दध्नो मथनेन जायते, तथा सारात्सारभूतं सर्वस्मात् ज्ञानादुत्तमं ज्ञानं षडक्षरमन्त्रजपादुत्पद्यते । यथा च शम्भुर्मुमुक्षूणां संसाराभयनाशकस्तथाऽयं षडक्षरात्मको मन्त्रः संसारभयनाशकः ।[२] सर्वे शिवमन्त्रा अस्य मन्त्रस्यार्थप्रकाशकाः[३] । अत एवास्य मन्त्रराजत्वम् । तदुक्तम्—

**प्रमाणभूतः सर्वेषां वेदोक्तत्वाद्विशेषतः ।**
**प्रणवेन युतो देवि मन्त्रराजः प्रकीर्तितः**[४] ।। इति ।

वेदोक्तत्वादयं मन्त्रः सर्वेषां विशेषतया प्रमाणभूतः । ओङ्कारयुक्तः सन्नयं मन्त्रराज इति कीर्त्यते । अस्य महिम्ना मनुष्यः श्रेष्ठत्वं भजते । तथा चोक्तम्—

**नगानां हि यथा मेरुः सरसां सागरो यथा ।**
**सरितां च यथा गङ्गा पशूनां गौर्यथा वरा ।।**
**मणीनां कौस्तुभो यद्वल्लोहानां काञ्चनो यथा ।**
**तथा षडक्षरपरो मानुषेषु वरः प्रिये**[५] ।। इति ।

यथा पर्वतेषु मेरुः, जलनिधिषु सागरः, नदीषु गङ्गा, पशुषु गौः, मणिषु कौस्तुभः, लोहेषु काञ्चनं च श्रेष्ठतां भजन्ते, तथा मनुष्येषु षडक्षरमन्त्रनिष्ठः श्रेष्ठत्वं भजते । अस्य मन्त्रस्य ज्ञानमेव परमोत्कृष्टं शिवज्ञानम् । तदेव ज्ञानस्य परमावधित्वेनोक्तम्—

**एतावद्धि शिवज्ञानमेतावत्परमं पदम् ।**
**यस्यों नमः शिवायेति सदा वाचि प्रवर्तते**[६] ।। इति ।

यस्य वाचि ओन्नमः शिवायेति षडक्षरमन्त्रः प्रवर्तते, तेनैव शिवज्ञानस्य परमावधिः प्राप्यते परमपदं च वशीक्रियते ।

पारमेश्वरागमे च षडक्षरमन्त्रस्य माहात्म्यं सम्यग्वर्णितम् । अस्मिन् मन्त्रे साक्षात् शिवः प्रतिष्ठितः । तथा चोक्तम्—

---

१. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ४.६८ ।
२. तत्रैव, ३.५४ ।
३. तत्रैव, ३.१५ ।
४. तत्रैव ३.१६ ।
५. तत्रैव, ३.८२-८३ ।
६. तत्रैव, ३.८४ ।

**मन्त्रस्त्वक्षरतः सूक्ष्मः पञ्चब्रह्मतनुः शिवः ।**
**वाच्यवाचकभावेन स्थितः साक्षात् स्वभावतः ।।**
**वाच्यः शिवः प्रमेयत्वान्मन्त्रस्तद्वाचकः स्मृतः ।**
**वाच्यवाचकभावोऽयमनादिः संस्थितस्तयोः**[१] ।। इति ।

अयं षडक्षरमन्त्रः प्रत्यक्षरं सूक्ष्मः। मन्त्रेऽस्मिन् पञ्चब्रह्मशरीरः शिवो वाच्यवाचकसम्बन्धेन साक्षात्स्वभावतया तिष्ठति। तत्र वाच्यः शिवः प्रमेयत्वात्, अयं षडक्षरमन्त्रस्तस्य वाचक इति ज्ञायते। शिवस्य मन्त्रस्य च यो वाच्यवाचकरूपः सम्बन्धो विद्यते, स अनादित्वेन तिष्ठति। मन्त्राणामधिपेन शिवेन प्रणीतोऽयं मन्त्रो निर्मलभावेनानन्यसदृशः प्रतिभाति। तस्मिन्नेव मन्त्रे साङ्गानि वेदशास्त्राणि निलीनानि।[२] इदमत्र रहस्यम्—

**शिवज्ञानानि यावन्ति विद्यास्थानानि यानि च ।**
**षडक्षरस्य सूत्रस्य तानि भाष्यं समासतः**[३] ।। इति ।

षडक्षरमन्त्रः सङ्क्षेपतया सूत्ररूपो यस्य सर्वाणि शिवज्ञानपराणि शास्त्राणि भाष्यभूतानि। अतः षडक्षरमन्त्रे हृदि स्थिते मन्त्रैरन्यैः शास्त्रैर्वा किं फलम् ? येन षडक्षराभ्यासः स्थिरीकृतस्तेन सर्वमधीतं श्रुतं च। येन षडक्षराभ्यासः क्रियते, तस्य वीरशैवस्याऽऽचारः स्थिरीकृतः, जीवितं सफलम्, मुक्तिः करस्था च[४]।

## पुरश्चरणविधिः

उपासनायां मन्त्रस्य स्थानं विशिष्टं वर्तते। तस्यां मन्त्रस्य जपोऽनिवार्यः। जपार्थं मन्त्रस्य सिद्धिरावश्यकी। मन्त्रसिद्ध्यर्थं पुरश्चरणविधिर्विहितः। पुरश्चरणं विना मन्त्रसिद्धिर्न भवति। पञ्चाङ्गपुरश्चरणं दशाङ्गपुरश्चरणं चेति द्विविधं विद्यते। जपः, होमः, तर्पणम्, अभिषेकः, ब्राह्मणभोजनं (जङ्गमभोजनं) चेति पञ्चाङ्गानि। एतैः सह पटलः, पद्धतिः, कवचम्, सहस्रनाम, स्तोत्रं चेति पञ्चाङ्गानां मेलनेन दशाङ्गानि भवन्ति। तत्र मन्त्रजपसंख्याया दशांशेन होमः, तद्दशांशेन तर्पणम्, तद्दशांशेनाभिषेकः, पुनस्तद्दशांशेन ब्राह्मणभोजनं (जङ्गमभोजनं) चेति पञ्चाङ्गविधिः। अनन्तरं पद्धतिमनुसृत्य पटल-कवच-सहस्रनाम-स्तोत्राणां पाठो दशाङ्गविधौ कर्तव्यः।

---

१. पारमेश्वरागमः, ६-२८.४
२. तत्रैव, ११.१९-२०।
३. तत्रैव, ११.२२।
४. तत्रैव, ११.२२-२५,२७।

सूक्ष्मागमे तावज्जप-तर्पण-होम-माहेश्वरभोजनानीति क्रमेण चत्वार्यङ्गान्युक्तानि। अभिषेको नामाऽङ्गं तु नोक्तम्। तत्रैव हि पुरश्चरणविधिरुक्तः। तथा हि–

**पञ्चलक्षं जपेद्देवि दीक्षितश्च विशेषतः।**
**अनन्यतत्परो भूत्वा तावत्संख्यादशांशकैः॥**
**क्षीराज्यैस्तर्पयित्वाऽथ जुहुयात्तद्दशांशकम्।**
**पायसैः शर्कराभिश्च माहेशांस्तु शिवव्रतान्॥**
**वेदमार्गैकनिरतान् सदाचारपरायणान्।**
**स्वधर्मनिरतान् शान्तान् भोजयेत्तद्दशांशतः॥**
**एवंकृतो महादेवि पौरश्चरणिको भवेत्**[१] ॥ इति।

दीक्षासम्पन्नः साधकोऽनन्यपरो भूत्वा पञ्चलक्षवारं (पञ्चाक्षरं षडक्षरं वा) मन्त्रं जपेत्। तद्दशांशकैर्मन्त्रैः (पञ्चाशत्सहस्रवारं मन्त्रपठनेन) क्षीरमिश्रितजलेन तर्पणं कुर्यात्। तद्दशांशेन (पञ्चसहस्रवारं मन्त्रपठनेन) होमः कार्यः। तद्दशांशकान् मन्त्रस्वरूपिण इति मत्वा शिवव्रतनिष्ठान् वेदमार्गैकनिरतान् सदाचारव्यापृतान् स्वधर्मपरायणान् शान्तान् माहेश्वरान् पायसैः शर्करादिभिश्च भोजयेत्। एवंकृतः पौरश्चरणिको भवति। एवं पुरश्चरणविधिना मन्त्रसिद्धिं सम्प्राप्याऽतन्द्रितः सन् नित्यमष्टोत्तरसहस्रवारं वाऽष्टोत्तरशतवारं वा यो जपं कुरुते, स सर्वपापानि निर्धूय शिवलोके महीयते[२]।

चन्द्रज्ञानागमे पारमेश्वरागमे च केवलं पुरश्चरणे कतिवारं मन्त्रजपः कर्तव्यः, इत्यस्मिन् विषये किञ्चिदुच्यते। तत्रेदमुक्तम्—

**जपेदक्षरलक्षं वै चतुर्गुणितमादरात्।**
**युक्ताशी संयमी यः स पौरश्चरणिकः स्मृतः॥**
**यः पुरश्चरणं कृत्वा नित्यजापी भवेत्पुनः।**
**तस्य नास्ति समो लोके स सिद्धः सिद्धिदो भवेत्**[३] ॥ इति।

पञ्चाक्षरमन्त्रमक्षरलक्षं जपेदित्यत्रैकैकाक्षरं लक्षवारमित्येव क्रमेण पञ्चलक्षवारं तं मन्त्रं जपेदित्यर्थः। चतुर्गुणितमित्यनेन विंशतिलक्षवारं मन्त्रजपः कर्तव्य इत्युक्तं भवति।

---

१. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.४५-४८।

२. तत्रैव, ३.४९।

३. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ८.५०-५१; पारमेश्वरागमः १२.७७-७९– 'युक्ताशी' इत्यत्र 'नक्ताशी' इत्यत्र 'यः पुरश्चरणम्' इत्यत्र 'तत्पुरश्चरणम्' इति च पाठान्तरे।

यो युक्ताशी संयमी भूत्वा विंशतिलक्षवारं मन्त्रजपं करोति, स पौरश्चरणिक इत्युच्यते। एवं पुरश्चरणं कृत्वा यो नित्यजापी भवति, तस्य लोके न कोऽपि समानः। स एव सिद्धः सिद्धिदश्च।

## जपविधिः

सूक्ष्मागमोक्तदिशा स्नानानन्तरमावाहिनी, स्थापिनी, सन्निधापिनी, सम्मुखीकरणी, अवकुण्ठिनी, वरदा चेति षण्मुद्राः प्रदर्श्य साधको गन्धपुष्पधूपदीपनैवेद्यमुद्राभिर्मानसैः पञ्चोपचारैः पूजयित्वा शान्तभावेन नदीतीरे पर्वताग्रे देवागारे वा, विशेषतया निर्दोषे निरुपद्रवे च विविक्तदेशे वा मन्त्रजपं कुर्यात्[१]। तदा साधकः प्राङ्मुखो वोदङ्मुखो वा पद्मासने उपविष्टः समकायशिरोग्रीवः सन् त्रपालस्यादिवर्जितो भूत्वा शिवध्यानपूर्वकं जपं कुर्यात्। तादृशजपाद्योगी निःसंशयं जीवन्मुक्तो भवति[२]। चन्द्रज्ञानागमोक्तरीत्या स्नानं कृत्वा प्राङ्मुखो वा उदङ्मुखो वोपविश्य रुचिरमासनं बद्ध्वा, हृदि शङ्करं ध्यात्वा, स्वगुरुं तद्गुरुञ्च सञ्चिन्त्य, मौनी एकाग्रचित्तश्च भूत्वा, प्राणायामद्वारा शोषणं दहन-माप्यायनं चेति विधिभिः पञ्चभूतशुद्धिं साधयित्वा, मन्त्रन्यासादिद्वारा शिवकलाभिः स्वकीयं शरीरं पवित्रीकृत्य, शक्तिविशिष्टं शिवं ध्यायन्, विद्यां, स्थानं स्वरं रूपमृषिं छन्दो देवतां बीजं शक्तिं तथा वाच्यमीश्वरं च स्मृत्वा पञ्चाक्षरं जपेत्[३]। अत्र मन्त्रन्यासद्वारा सकलीकरणमुक्तम्। न्यासविधिः पश्चान्निरूप्यते।

प्रथमं वाचिक उपांशुर्मानसश्चेति जपस्त्रिविधः। एते क्रमेणोत्तममध्यमाधमत्वेन परिगणिताः। अस्य जपत्रैविध्यस्योल्लेखो मनुस्मृतावपि दृश्यते। शैवागमेषु त्रयाणां जपानां स्वरूपं सम्यग्वर्णितम्। तत्र सूक्ष्मागमोक्तदिशा त्रयाणां जपानां लक्षणान्येवं वर्तन्ते—

**उच्चैस्ताल्वादिकस्पर्शाज्जपेत् स्पष्टपदाक्षरम्।**
**सम्यक्श्रोत्रगतश्चैव स जपो वाचिकः स्मृतः॥**
**शनैस्ताल्वादिकस्पर्शात् किञ्चित् स्पष्टपदाक्षरम्।**
**जपेदीषत्कर्णगतमुपांशुः स जपो भवेत्॥**
**मन्त्रार्थं मनसा ध्यायन् वर्णाद्वर्णं पदात्पदम्।**
**आवृत्य गणनात्पूर्वं जपेन्मानस उच्यते[४]॥** इति।

---

१. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.३८-३९।
२. तत्रैव, ३.४०।
३. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ८.५२-५५; पारमेश्वरागमः, ११.७९-८३।
४. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.४२-४३।

तात्वादिवर्णोत्पत्तिस्थानस्पर्शपूर्वकं स्पष्टपदाक्षरमुच्चैः पार्श्वस्थैर्यथा श्रूयते तथोच्चार्यमाणो जपो वाचक इति स्मृतः। तेषामेव स्थानानां स्पर्शपूर्वकमस्पष्टपदाक्षरमीषदिव पार्श्वस्थैर्यथा श्रूयते, तथोच्चार्यमाणो जप उपांशुरित्युक्तः। मन्त्रस्यार्थं मनसि ध्यायन् वर्णाद्वर्णं पदात्पदं चावृत्य मनस्येव स्मर्यमाणो जपो मानस इति मन्यते। चन्द्रज्ञानागमे पारमेश्वरागमे च किञ्चिद्भिन्नरीत्या त्रयाणां जपानां वर्णनं कृतम्। तथा हि—

**यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः।**
**मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः॥**
**जिह्वामात्रपरिस्पन्दादीषदुच्चारितोऽपि वा।**
**अपरैरश्रुतः स्वेन श्रुतश्चोपांशुरुच्यते॥**
**धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम्।**
**शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः**[१] ॥ इति।

उदात्तानुदात्तस्वरितैः स्पष्टपदाक्षरैः शब्दैर्यो मन्त्रस्योच्चारो वाचा क्रियते, स वाचिको जपः। जिह्वामात्रचलनेन य ईषदुच्चारितः सन्, अपरैरश्रुतोऽपि स्वेन श्रूयमाणः स उपांशुः जपः। यश्च मनसाऽक्षरक्रमेण वर्णाद्वर्णं पदात् पदं शब्दार्थयोश्चिन्तनं स मानसो जपः।

त्रिविधे जपे मानसो जप उत्तम इत्युक्तम्। तथा हि–

(अ) **त्रयाणामपि चैतेषां वरं स्यादुत्तरोत्तरम्।**
(आ) **उत्तमो मानसः प्रोक्त उपांशुर्मध्यमस्तथा।**
**अधमो वाचिकः प्रोक्त इत्येतच्छिवशासनम्॥**
(इ) **उत्तमं मानसं जप्यमुपांशुं मध्यमं विदुः।**
**अधमं वाचिकं प्राहुरागमार्थविशारदाः**[२] ॥

मानसादपि जपात् सगर्भो नामान्यो जपः श्रेष्ठ इति शैवागमा वदन्ति। अत्र सगर्भोऽगर्भश्चेति पुनर्जपो द्विविध इति ज्ञेयम्। सूक्ष्मागमानुसारेण प्राणायामसमायुक्तः सगर्भजपः, तद्रहितश्चागर्भजपः। तदुक्तम्–

**प्राणायामसमायुक्तः सगर्भो जप उच्यते।**
**प्राणायामेन रहितो ह्यगर्भो जप उच्यते**[३] ॥ इति।

---

१. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ८.५६-५९; पारमेश्वरागमः, ११.८६-८८।
२. (अ) सूक्ष्मागमः, क्रि.पा., ३.४३; (आ) चन्द्रज्ञानागम, क्रि.पा., ८.५६; पारमेश्वरागमः।
३. चन्द्रज्ञानागमः, क्रि. पा., ८.६२।

पारमेश्वरागमोक्तदिशा तु कुम्भकप्राणायामसहित: सगर्भजप:, पूरकरेचकप्राणायाम-सहितश्चाऽगर्भजप: । तथा चोक्तम्-

**कुम्भकेन समायुक्त: सगर्भो जप उच्यते ।**
**आद्यन्तयोरगर्भोऽपि प्राणायाम: प्रशस्यते**[१] ।। इति ।

सध्यान इति षष्ठ: प्रभेदोऽप्यस्ति । तस्य लक्षणं तु न दत्तम् । अगर्भं विहाय पञ्चविधेषु शक्त्यनुसारेणैको जप: कर्तव्य इत्यागमशासनम् । तदुक्तम्-

**एषु पञ्चविधेष्वेव कर्तव्य: शक्तितो जप:**[२] ।। इति ।

एतेषु तारतम्यमेवमुद्घाटितम्-

**वाचिकस्त्वेक एव स्यादुपांशु: शतमुच्यते ।**
**साहस्रं मानसं प्रोक्तं सगर्भस्तच्छताधिक: ।।**

...............................................

**सगर्भादपि साहस्रं सध्यानो जप उच्यते**[३] ।। इति ।

एवं वाचिकजपाद् उपांशुजपस्य शतगुणफलम्, उपांशुजपान्मानसस्य सहस्रगुणफलम्, मानसजपात् सगर्भजपस्य शतगुणफलम्, सगर्भजपादपि सध्यानजपस्य सहस्रगुणफलम् । अतो वाचिकाद् उपांशु: श्रेष्ठ:, उपांशोर्मानस:, मानसात् सगर्भ:, सगर्भात् सध्यानश्च ।

जपसंख्याभेदेन फलभेदरूप: काम्यजपोऽप्युक्त: । तथा हि सूक्ष्मागमे पारमेश्वरागमे चोक्तप्रकारेण रोगाणां निवारणाय द्विसहस्रं जपं कुर्यात्; आयुष्यवृद्ध्यर्थं त्रिसहस्रम्, उत्तरोत्तरवृद्ध्यर्थं नित्यं सहस्रशो जपं कुर्यात् । आज्यान्वितैस्तिलैर्लक्षजपपूर्वकं होमे कृते उत्पातजनितक्लेशानां निवारणं भवति । शतलक्षजपेन साधक: साक्षात् शिव एव भवति[४] । एवं रोगनिवारणादिफलेच्छव उक्तरीत्या मन्त्रजपं विधाय स्वेष्टफलं प्राप्तुं शक्नुवन्ति । सकामजपैरैहिकफलम्, अकामजपैरामुष्मिकफलमित्यकामजप: श्रेयान् ।

## न्यासविधि:

पञ्चाक्षरमन्त्रन्यास: किमर्थं करणीय इति चेत्, चन्द्रज्ञानागमे उत्तरं दत्तम् । तत्रोक्तदिशा निवृत्ति:, प्रतिष्ठा, शान्ति:, शान्त्यतीता चेति पञ्चकला: पृथिव्यप्तेजोवाय्वा-

---

१. पारमेश्वरागम:, ११.८९-९० ।

२. चन्द्रज्ञानागम:, ८.६४; पारमेश्वरागम:, ११.९२- 'पञ्चविधेष्वेव' इत्यत्र 'पञ्चविधेष्वेक' इति पाठान्तरम् ।

३. चन्द्रज्ञानागम:, ८.६०,६४; पारमेश्वरागम:, ११.८८,९२ ।

४. पारमेश्वरागम:, ११.१०५-१०८ ।

काशरूपपञ्चभूतात्मिका भवन्ति। तासां चिह्नैः पञ्चभूताधिपतिभिश्च सह हृदय-कण्ठ-तालु-भ्रूमध्य-ब्रह्मरन्ध्रेषु तासां कलानां पञ्चभूतात्मकदेहस्य च शोधनार्थं पञ्चाक्षरमन्त्रं (तदीयान्यक्षराणीति यावत्) न्यसेत[1]। एवं स्वदेहं संशोध्य विद्यामयं कर्तुं न्यासविधिर्विहितः। देहस्य विद्यामयीकरणप्रक्रिया तावच्चन्द्रज्ञानागमे सम्यग्वर्णिता—

**प्राणवायुं निरुद्ध्याथ गुणसंख्यानुसारतः।**
**भूतग्रन्थिं ततश्छिन्द्यादस्त्रेणैवास्त्रमुद्रया।।**
**नाड्या सुषुम्नयात्मानं प्रेरितं प्राणवायुना।**
**निर्गतं ब्रह्मरन्ध्रेण योजयेच्छिवतेजसा।।**
**वायुना च विशोष्यैव देहं कालाग्निना दहेत्।।**
**अमृतप्लावनं कृत्वा भस्मीभूतस्य तस्य वै।**
**ततो विद्यामयं देहं सम्भूतमिति भावयेत्।।**
**ततो विद्यामये तस्मिन् देहे दीपशिखाकृतिम्।**
**शिवान्निर्गतमात्मानं ब्रह्मरन्ध्रेण योजयेत्।।**
**अन्तर्देहं प्रविष्टं तं ध्यात्वा हृदयपङ्कजे।**
**पुनश्चामृतवर्षेण सिञ्चेद् विद्यामयं वपुः[2]।।** इति।

प्राणायामेन प्राणवायुं निरुद्ध्य गुणसंख्यानुसारमस्त्रमन्त्रं जपन् अस्त्रमुद्रां प्रदर्श्य भूतग्रन्थीन् छिन्द्यात्। प्राणवायुद्वारा प्रेरितं सुषुम्नानाड्या ब्रह्मरन्ध्रान्निर्गतं चात्मानं शिवतेजसा योजयेत्। वायुना स्वकीयं पापमयं शरीरं विशोष्य कालाग्निना तस्य दहनं भावयेत्। भस्मीभूतमिति भावितं तच्छरीरममृतेनाऽऽप्यायितं कृत्वा तदेव नवीनं विद्यामयं शरीरं सञ्जातमिति भावयेत्। तस्मिन् विद्यामये शरीरे दीपशिखाकृतिं स्वकीयमात्मानं शिवतेजसाऽऽप्लाव्य पुनर्ब्रह्मरन्ध्रद्वारा स्वशरीरे संयोजयेत्। एवमन्तर्देहप्रविष्टं विद्यामयं शिवतेजसं स्वकीये हृदयकमले ध्यात्वा पुनस्तद् विद्यामयं शरीरममृतवर्षेणाऽऽप्यायितं कुर्यात्। एवं स्वकीयं शरीरं विद्यामयं कृत्वा पुनर्मन्त्रन्यासं कुर्यादिति नियमः।

करन्यासः, देहन्यासः, अङ्गन्यासश्चेति न्यासत्रैविध्यं प्रसिद्धम्। तत्र चन्द्रज्ञानागमे करन्यासस्य स्थित्युत्पत्तिलयाख्यं त्रैविध्यमुक्तम्। स्थितिकरन्यासो गृहस्थानां सुवासिनीनां च, उत्पत्तिकरन्यासो (सृष्टिन्यासो) ब्रह्मचारिणां कन्यानां च, लयकरन्यासो (संहारन्यासो) वानप्रस्थानां संन्यासिनां विधवानां चेष्यन्ते[3]। एतेषां न्यासानां क्रमस्तत्रैवोक्तः—

---

१. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ११.२५-२६।

२. तत्रैव, ११.२७-३१।

३. तत्रैव, ११.२१-२२।

**अङ्गुष्ठादिकनिष्ठान्तं स्थितिन्यास इति स्मृतः ।**
**दक्षिणाङ्गुष्ठमारभ्य वामाङ्गुष्ठान्तमेव च ।।**
**उत्पत्तिन्यास आख्यातो विपरीतस्तु संहृतिः[१] ।।** इति ।

अङ्गुष्ठादिकनिष्ठान्तं स्थितिन्यासः, दक्षिणाङ्गुष्ठादिवामाङ्गुष्ठान्तं सृष्टिन्यासः, विपरीतं च (अर्थाद् वामाङ्गुष्ठादिदक्षिणाङ्गुष्ठान्तं च) संहारन्यास इति हि तेषां लक्षणम् । 'न-म-शि-वा-य' इति पञ्चाक्षराणि सबिन्दुकान्यङ्गुष्ठादारभ्य कनिष्ठिकापर्यन्तमङ्गुलीषु न्यस्येत्, करतलकरपृष्ठे च शिवं न्यस्येत् । अनन्तरं दशदिक्षु अस्त्रमन्त्रं पठन् अस्त्रन्यासः करणीयः[२] । पूर्वोक्तरीत्या शरीरस्य विद्यामयीकरणानन्तरं करशुद्धिपूर्वकं करन्यासो देहन्यासोऽङ्गन्यासश्च करणीय इत्युक्तम्[३] ।

सूक्ष्मागमे तु करन्यासः, अङ्गन्यासः (देहन्यासः), षडङ्गन्यास(अङ्गन्यास)श्चेति न्यासत्रयं भिन्नरीत्या निरूपितम् । तत्र नकारादीन् बिन्दुयुक्तान् चतुर्थ्यन्तैः पञ्चब्रह्मनामभिः सह कनिष्ठाद्यङ्गुलीषु न्यस्यते चेत्, स करन्यासः । तान् तैरेव सह मुखे, हृदये, पादद्वये, गुह्ये, शिरसि च न्यस्यते चेत्, स देहन्यासः । ओङ्कारस्य नकारादीनां च बिन्दुयुक्तानामनन्त-सर्वज्ञ-नित्यतृप्ति-अनादिबोध-स्वतन्त्र-अलुप्तशक्तिधामभिश्चतुर्थ्यन्तैः सह, हृदय-शिरः-शिखा-कवच-नेत्रत्रय-अस्त्राणां चतुर्थ्यन्तानां पल्लवैश्च सह न्यासः षडङ्गन्यासः[४] । एतेषां न्यासानां क्रमो वैशद्यार्थमधस्ताद् दत्तः—

**करन्यासः–** नं सद्योजाताय कनिष्ठिकाभ्यां नमः, मं वामदेवाय अनामिकाभ्यां नमः, शिं अघोराय मध्यमाभ्यां नमः, वां तत्पुरुषाय तर्जनीभ्यां नमः, यं ईशानाय अङ्गुष्ठाभ्यां नमः ।। **अङ्गन्यासः (देहन्यासः)**– नं सद्योजाताय नमो मुखे, मं वामदेवाय नमो हृदये, शिं अघोराय नमः पादद्वये, वां तत्पुरुषाय नमो गुह्ये, यं ईशानाय नमः शिरसि ।। **षडङ्गन्यासः (अङ्गन्यासः)**– ओं अनन्तशक्तिधाम्ने हृदयाय नमः, नं सर्वज्ञशक्तिधाम्ने शिरसे स्वाहा, मं नित्यतृप्तिशक्तिधाम्ने शिखायै वषट्, शिं अनादिबोधशक्तिधाम्ने कवचाय हुम्, वां स्वतन्त्रशक्तिधाम्ने नेत्रत्रयाय वौषट्, यं अलुप्तशक्तिधाम्ने अस्त्राय फट् । (भूर्भुवस्स्वरोमिति दिग्बन्धः) ।

पारमेश्वरागमोक्तप्रकारेण 'न-म-शि-वा-य' इति मन्त्रवर्णान् सबिन्दुकान् चतुर्थ्यन्तैस्तत्पुरुषाघोरसद्योजातवामदेवेशानैः सह तर्जनीमध्यमाकनिष्ठिकानामिकाङ्गुष्ठेषु

१. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ११.२३ ।
२. तत्रैव, ११.२४ ।
३. तत्रैव, ११.३२ ।
४. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.३१-३३ ।

न्यस्येत्। अयं करन्यासः। तानेव तैरेव सह मुखहृदयपादगुह्यशिरःसु न्यासं कुर्यात्। अयं चाङ्गन्यासः[१]। अनयोः क्रमो वैशद्यार्थमत्र दत्तः– **करन्यासः**– ओं नं तत्पुरुषाय तर्जनीभ्यां नमः, ओं मं अघोराय मध्यमाभ्यां नमः, ओं शिं सद्योजाताय कनिष्ठिकाभ्यां नमः, ओं वां वामदेवाय अनामिकाभ्यां नमः, ओं यं ईशानाय अङ्गुष्ठाभ्यां नमः॥

**अङ्गन्यासः (देहन्यासः)**– ओं नं तत्पुरुषाय नमो मुखे, ओं मं अघोराय नमः हृदये, ओं शिं सद्योजाताय नमः पादयोः, ओं वां वामदेवाय नमः गुह्ये, ओं यं ईशानाय नमः शिरसि॥

एवं शैवागमेषु विभिन्नक्रमेण करन्यासः, अङ्गन्यासः (देहन्यासः), षडङ्गन्यास- (अङ्गन्यासः)श्चेति न्यासत्रयं निरूपितम्। केवलं चन्द्रज्ञानागमे करन्यासविषये सृष्टिस्थितिसंहारन्यासक्रमा उक्ताः। वर्णन्यासः, मातृकान्यासः, मातृकाक्षरन्यासः, ब्रह्मन्यासः, प्रणवन्यासः, पञ्चाक्षरन्यासः, गोलकन्यासश्चेति न्यासान्तराण्युक्तानि[२]। तत्र वर्णन्यासः, मातृकान्यासः, मातृकाक्षरन्यासश्चेति न्यासा अभिन्नाः। ब्रह्मन्यासः पञ्चब्रह्मन्यास एव। पञ्चाक्षरन्यासः पश्चात् प्रदर्श्यते। हृदि, वक्त्रे, अंसयोः, ऊर्वोः, कण्ठे, नाभौ, पार्श्वद्वये, पृष्ठे, हृदि, मूर्ध्नि, वदने, नेत्रयोः, दोषोः, सन्धिषु, मणिबन्धयोश्च षडक्षरविद्याया न्यासो गोलकन्यास इत्युच्यते[३]।

सृष्ट्यादिक्रमेण करन्यासादीनां परिष्कृतं स्वरूपमत्र दीयते—

## मूलपञ्चाक्षरमन्त्रन्यासाः

ओं नमः शिवाय इत्यस्य श्रीमूलपञ्चाक्षरीमहामन्त्रस्य वामदेव ऋषिः (शिरसि), पङ्क्तिश्छन्दः, (मुखे), श्रीसदाशिवो देवता (हृदये), ओं बीजम् (नाभौ), उमा शक्तिः (गुह्ये), शिव इति कीलकम् (पादयोः), श्रीसदाशिवप्रीत्यर्थे जपे विनियोगः।

### सृष्टिन्यासक्रमः

**करन्यासः**

ओं यं ओं सर्वज्ञशक्तिधाम्ने अङ्गुष्ठाभ्यां नमः।
ओं वां ओं नित्यतृप्तिशक्तिधाम्ने तर्जनीभ्यां नमः।
ओं शिं ओं अनादिबोधशक्तिधाम्ने मध्यमाभ्यां नमः।
ओं मं ओं स्वतन्त्रशक्तिधाम्ने अनामिकाभ्यां नमः।

---

१. पारमेश्वरागमः, ११.४६-४८
१. चन्द्रज्ञानागमः, उत्तरभागः क्रियापादः, ११.३३, ३५-३७।
३. पारमेश्वरागमः, ११.५०-५१

ओं नं ओं अलुप्तशक्तिधाम्ने कनिष्ठिकाभ्यां नमः ।
ओं ओं ओं अनन्तशक्तिधाम्ने करतलकरपृष्ठाभ्यां नमः ।

**देहन्यासः**

ओं यं ओं ईशानाय नमः शिरसि ।
ओं वां ओं तत्पुरुषाय नमो मुखे ।
ओं शिं ओं अघोराय नमो हृदये ।
ओं मं ओं वामदेवाय नमो गुह्ये ।
ओं नं ओं सद्योजाताय नमः पादद्वये ।
ओं ओं ओं प्रणवाय नमः सर्वाङ्गे ।

**अङ्गन्यासः**

ओं यं ओं सर्वज्ञशक्तिधाम्ने हृदयाय नमः ।
ओं वां ओं नित्यतृप्तिशक्तिधाम्ने शिरसे स्वाहा ।
ओं शिं ओं अनादिबोधशक्तिधाम्ने शिखायै वषट् ।
ओं मं ओं स्वतन्त्रशक्तिधाम्ने कवचाय हुँ ।
ओं नं ओं अलुप्तशक्तिधाम्ने नेत्रत्रयाय वौषट् ।
ओं ओं ओं अनन्तशक्तिधाम्ने अस्त्राय फट् ।
भूर्भुवस्स्वरोमिति दिग्बन्धः ।

## स्थितिन्यासक्रमः

**करन्यासः**

ओं शिं ओं अनादिबोधशक्तिधाम्ने मध्यमाभ्यां नमः ।
ओं वां ओं नित्यतृप्तिशक्तिधाम्ने तर्जनीभ्यां नमः ।
ओं यं ओं सर्वज्ञशक्तिधाम्ने अङ्गुष्ठाभ्यां नमः ।
ओं नं ओं अलुप्तशक्तिधाम्ने कनिष्ठिकाभ्यां नमः ।
ओं मं ओं स्वतन्त्रशक्तिधाम्ने अनामिकाभ्यां नमः ।
ओं ओं ओं अनन्तशक्तिधाम्ने करतलकरपृष्ठाभ्यां नमः ।

**देहन्यासः**

ओं शिं ओं अघोराय नमो हृदये ।
ओं वां ओं वामदेवाय नमो गुह्ये ।
ओं यं ओं सद्योजाताय नमः पादद्वये ।
ओं नं ओं ईशानाय नमः शिरसि ।

ओं मं ओं तत्पुरुषाय नमो मुखे।
ओं ओं ओं प्रणवाय नमः सर्वाङ्गे।

**अङ्गन्यासः**

ओं शिं ओं अनादिबोधशक्तिधाम्ने कवचाय हूँ।
ओं वां ओं नित्यतृप्तिशक्तिधाम्ने नेत्रत्रयाय वौषट्।
ओं यं ओं सर्वज्ञशक्तिधाम्ने अस्त्राय फट्।
ओं नं ओं अलुप्तशक्तिधाम्ने हृदयाय नमः।
ओं मं ओं स्वतन्त्रशक्तिधाम्ने शिरसे स्वाहा।
ओं ओं ओं अनन्तशक्तिधाम्ने शिखायै वषट्।
भूर्भुवस्स्वरोमिति दिग्बन्धः।

## संहारन्यासक्रमः

**करन्यासः**

ओं नं ओं अलुप्तशक्तिधाम्ने कनिष्ठिकाभ्यां नमः।
ओं मं ओं स्वतन्त्रशक्तिधाम्ने अनामिकाभ्यां नमः।
ओं शिं ओं अनादिबोधशक्तिधाम्ने मध्यमाभ्यां नमः।
ओं वां ओं नित्यतृप्तिशक्तिधाम्ने तर्जनीभ्यां नमः।
ओं यं ओं सर्वज्ञशक्तिधाम्ने अङ्गुष्ठाभ्यां नमः।
ओं ओं ओं अनन्तशक्तिधाम्ने करतलकरपृष्ठाभ्यां नमः।

**देहन्यासः**

ओं नं ओं सद्योजाताय नमः पादद्वये।
ओं मं ओं वामदेवाय नमो गुह्ये।
ओं शिं ओं अघोराय नमो हृदये।
ओं वां ओं तत्पुरुषाय नमो मुखे।
ओं यं ओं ईशानाय नमः शिरसि।
ओं ओं ओं प्रणवाय नमः सर्वाङ्गे।

**अङ्गन्यासः**

ओं नं ओं अलुप्तशक्तिधाम्ने अस्त्राय फट्।
ओं मं ओं स्वतन्त्रशक्तिधाम्ने नेत्रत्रयाय वौषट्।
ओं शिं ओं अनादिबोधशक्तिधाम्ने कवचाय हुं।
ओं वां ओं नित्यतृप्तिशक्तिधाम्ने शिखायै वषट्।

ओं यं ओं सर्वज्ञशक्तिधाम्ने शिरसे स्वाहा।
ओं ओं ओं अनन्तशक्तिधाम्ने हृदयाय नमः।
भूर्भुवस्स्वरोमिति दिग्बन्धः।

## जपे अक्षमालिकाप्रयोगः

अङ्गुलीभिरङ्गुलिरेखाभिरक्षमालया वा जपः कर्तव्यः। तत्राऽक्षमालिकाविषये अक्षमालिकोपनिषदि प्रवाल-मौक्तिक-स्फटिक-शङ्खरजताष्टापद-चन्दन-पुत्रजीविकाब्जरुद्राक्षै-रक्षमालिका रचनीयाः। तेषां योजने सौवर्णं राजतं ताम्रं वा सूत्रं प्रयुज्यते[१]। तत्राऽक्षमालिकायां शिरोमणिना सह चतुरधिकपञ्चाशदक्षा भूयासुः, द्विरावर्तनेनाऽष्टोत्तरशतवारं जपस्य कर्तव्यतयोक्तत्वात्[२]। तामक्षमालिकां पञ्चगव्यैः पञ्चामृतैश्च शोधयित्वा पञ्चगव्यैर्गन्धोदकेन च संस्नाप्याऽष्टभिर्गन्धैरालिप्य सुमनःस्थले निवेश्याऽक्षतपुष्पैः सम्पूज्य प्रत्यक्षं मन्त्रपूर्वकमादिक्षान्तैर्वर्णैर्भावयेत्[३]।

सूक्ष्मागमे तावद् अभङ्गुरा दृढाः स्निग्धा नवा दृष्टिप्रियाः शुभाः श्रेष्ठा रुद्राक्षा जपमालायां योजनीया इत्युक्तम्। रुद्राक्षस्योन्नतभागो वक्त्रं निम्नभागश्च पृष्ठमित्युच्येते। त्रिवृता पट्टसूत्रेण कार्पाससूत्रेण वा वक्त्रं वक्त्रेण पृष्ठं पृष्ठेन इत्येवं क्रमेण रुद्राक्षा योजनीयाः। मालिकाया मूलभागे स्थूलमणयोऽग्रे सूक्ष्ममणयश्च भवेयुः। मणीनां परस्पर-घर्षणं मा भूदिति मणीनामन्तरे वर्तनद्वय्यो ग्रन्थयो बध्नीयात्। मालाग्रद्वयं परिवृत्य मेर्वाख्यं शिरोमणिं योजयेत्। जपसमये मेरोरुल्लङ्घनं यथा न भवति तथा सावधानैर्भवितव्यम्[४]।

तत्रैवाऽक्षमालिकायाः संस्कार उक्तः। तदनुसारेणाक्षमालिकां पञ्चामृतैः पञ्चगव्यैश्चाभिषिच्य गुरुः संस्कुर्यात्। गुरुर्मन्त्रमष्टोत्तरशतवारं जप्त्वा तां जपमालिकां वर्णात्मकत्वेन ध्यात्वा शिष्याय दद्यात्। तया शिष्यो नित्यं जपेत्[५]। तामक्षमालिकामशुचिस्थले न क्षिपेत्, वामपाणिना न स्पृशेत्, दीक्षाहीनस्य न दर्शयेत्। जपकाले जप्त्वा तां कुत्रापि गोपयेत्। प्रमादात् नियमभङ्गे जाते पुनर्गुरुणाऽक्षमालिकासंस्कारं कारयेत्[६]।

चन्द्रज्ञानागमेऽङ्गुल्यादिभिर्जपसंख्यानमनुलक्ष्य फलभेदो निरूपितः। तदनुसारेण अङ्गुल्या जपसंख्याने कृते एकजपेनैकं फलम्, अङ्गुलिरेखाभिः कृतेऽष्टगुणम्, पुत्रजीवमालया

१. अक्षमालिकोपनिषत्, २।
२. तत्रैव, १४।
३. तत्रैव, ४।
४. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.६२-६८।
५. तत्रैव, ३.६९-७०।
६. तत्रैव, ३.७२-७३।

कृते दशगुणम्, शङ्खमणिमालया कृते शतगुणम्, प्रवालमालया कृते सहस्त्रगुणम्, स्फटिकमणिमालया कृते लक्षगुणम्, पद्माक्षमालया रुद्राक्षमालया वा कृतेऽनन्तं च फलम्[१]। अक्षसंख्यावशादक्षमालया कृतस्य जपस्य फलभेदोऽप्युक्तः। तथा हि– जपकर्मणि त्रिंशदक्षैः कृता माला धनदा, सप्तविंशत्यक्षैः कृता पुष्टिप्रदा, पञ्चविंशत्यक्षैः कृता मुक्तिप्रदा, पञ्चदशाक्षैः कृताऽभिचारफलप्रदा चेत्यक्षसंख्यानुगुणेन जपस्य फलम्[२]। एवमेवाङ्गुलिजपविषयेऽङ्गुलिभेदेन फलभेदो विद्यते। तथा हि– अङ्गुष्ठेन जपे कृते मोक्षप्राप्तिः, तर्जन्या कृते शत्रुनाशनम्, मध्यमया कृते धनप्राप्तिः, अनामिकया कृते शान्तिलाभः, कनिष्ठिकया कृते आकर्षणं चेति। तर्जन्यादिभिश्चतसृभिरङ्गुलीभिः क्रियमाणे जपे तु अङ्गुष्ठस्य सहयोग आवश्यकः। अङ्गुष्ठेन विना कृतो जपः फलहीनो भवति[३]। गृहादिस्थानभेदेनापि, जपस्य फलभेदो निरूपितः। तथा हि– गृहे एकजपेनैकं फलम्, गोष्ठे शतगुणम्, पुण्यारण्ये आरामे वा सहस्त्रगुणम्, पर्वते दशसहस्त्रगुणम्, नद्यां लक्षगुणम्, देवालये कोटिगुणम्, शिवसन्निधौ चानन्तगुणं फलमुक्तम्[४]। इदमप्यत्र ज्ञेयम्–

**सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च।**
**विप्राणां च गवां चैव सन्निधौ शस्यते जपः[५]॥** इति।

## कस्मै मन्त्रो दातव्यः कस्मै च न

कस्मै पञ्चाक्षरः षडक्षरो वा मन्त्रो दातव्यः ? अर्थात् कोऽस्य मन्त्रस्याऽधिकारी ? इति पृष्टे उच्यते। सूक्ष्मागमोक्तदिशा मुक्त्यभिलाषी दृढव्रतः शिष्टो लिङ्गनिष्ठारतो विद्याहङ्कारनिर्मुक्तः सदाचाररत आस्तिको विशेषभक्तियुक्तः शान्तो गुरुवचनरतः शिवभक्तः सुशीलो धर्मिष्ठः सत्यव्रतपरायणो वेदमार्गनिरतः शिवैकशरणः शिवाराधनतत्परोऽस्य मन्त्रस्याऽधिकारी[६]। इयमत्रोक्तिः सारवती–

**येषु येषु महादेवि भक्तिरव्यभिचारिणी।**
**योग्यास्त एव मन्त्रस्य भक्तिरेवात्र कारणम्[७]॥**

---

१. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ८.६५-६७।
२. तत्रैव, ८.६८-६९।
३. तत्रैव, ८.७०-७२।
४. तत्रैव, ८.७२-७.३।
५. तत्रैव, ८.७५।
६. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.९०;४.६६-६७।
७. तत्रैव, ३.२९।

येषु येष्वव्यभिचारिणी भक्तिर्विद्यते, तेऽस्य मन्त्रस्याधिकारिणः । एवं भक्तिरेवात्र कारणम् ।

कस्मै मन्त्रो न दातव्य इत्यस्मिन् विषये– नास्तिकाय कृतघ्नाय भक्तिहीनाय शिवाचारविरोधिने दम्भिकाय विषयग्रस्तचेतसे चञ्चलाय व्रतभ्रष्टाय देवान्तरपराय पञ्चाक्षरः षडक्षरो वा मन्त्रो न दातव्य इति सूक्ष्मागमशासनम्[१] ।

## मन्त्रोपदेशे नियमः

शैवागमेषु द्विजेभ्यः षडक्षरमन्त्रः स्त्रीशूद्रेभ्यश्च प्रणवं विना पञ्चाक्षरमन्त्र उपदेष्टव्य इति नियम उक्तः । तथा हि सूक्ष्मागमे— **''प्रणवेन विना दद्यात् स्त्रीशूद्राणामिमं मनुम्''**[२] इत्युक्तम् । द्विजैरेव प्रणवयुक्तः षडक्षरमन्त्रो जप्तव्यः, स्त्रीभिः शूद्रैश्च प्रणवं विना पञ्चाक्षर एव । तत्र पञ्चाक्षरो नमोऽन्त एव स्यादिति नियमः । तथा चोक्तम्–

**द्विजैरियं तु जप्तव्या नित्यं प्रणवपूर्विका ।**
**स्त्रीभिः शूद्रैश्च जप्तव्या नमोऽन्ता प्रणवं विना**[३] ।। इति ।

द्विज एव तारेऽधिकारयुक्तः । अतः स सतारं षडक्षरमन्त्रं जपेत् । योऽस्याऽनधिकारी स तं न जपेत् । जपेत् चेत् स अधोगतिं गच्छति । तदुक्तम्–

**तारेऽधिकारयुक्तस्तु तारयुक्तं मनुं जपेत् ।**
**जपन्ननधिकारी तु तारं गच्छत्यधोगतिम्**[४] ।। इति ।

तारयुक्तः षडक्षरमन्त्रो लिङ्गस्वरूपः । पञ्चाक्षरमन्त्रः परमं ज्ञानम् । स चाऽधिकारयुक्तानां सतारो मन्त्रो भवति । अधिकारयुक्तैरेव स जप्यो भवति । तथा चोक्तम्–

**पञ्चाक्षरी महाविद्या सतारा लिङ्गरूपिणी ।**
**अधिकारयुजां तारे ध्येया सा मन्त्ररूपिणी**[५] ।। इति ।

अधिकारयुक्तानां षडक्षरमन्त्र ओङ्कारवदनं वा-य-कारभुजद्वयवत् शिकारमध्यदेहं नमःकारपदद्वयवच्च लिङ्गस्वरूपं धत्ते[६] । तदेव चित्ररूपेण दत्तमधस्तात्–

---

१. सूक्ष्मागमः, उत्तरभागः, क्रियापादः, ३.८९; ४.६३-६४ ।
२. तत्रैव, ३.२१ ।
३. चन्द्रज्ञानागमः, उत्तरभागः, क्रियापादः, ८.१० ।
४. तत्रैव, ११.४५ ।
५. तत्रैव, ११.४० ।
६. तत्रैव, ११.४२ ।




अनधिकारवतां तारे पञ्चाक्षरमन्त्रः शिकारवदनं वायकारभुजद्वयवत् विसर्गदेहमध्यं नमकारपादद्वयवच्च लिङ्गस्वरूपं धत्ते ।[१] तदेव चित्ररूपेण पुनर्दत्तमधस्तात्–




## उपसंहारः

एवं शैवागमोत्तरभागोक्तप्रकारेण पञ्चाक्षर-षडक्षरोभयात्मकस्य शिवमन्त्रस्य स्वरूपं महत्त्वं तत्सम्बद्धांश्चान्यविषयान् अधिकृत्य विस्तृतमीमांसा कृता। सर्वस्यास्य विषयस्य प्रभावो वीरशैवसिद्धान्तग्रन्थेषु दरीदृश्यते। तत्र शैवागमोत्तरभागानां सारसङ्ग्रहभूते श्रीसिद्धान्तशिखामणौ तत्प्रभावोऽधिकतया दृश्यते। अतः पूर्वोक्तविषयांशान् सङ्ग्रहेणोक्त्वा श्रीसिद्धान्तशिखामणौ मन्त्रविषये यो विचारो निरूपितः, स एवात्र तुलनात्मकतया प्रस्तूयते। तथा हि–

१. पञ्चाक्षरः षडक्षर इत्युभयात्मकमन्त्रः कृष्णयजुर्वेदीयरुद्राध्यायस्याऽष्टमानुवाकादुद्धृतः। तत्र 'नमः शिवाय' इति नमःशब्दस्य पूर्वत्वं शिवायेति चतुर्थ्यन्तशब्दस्योत्तरत्वं चेति मन्त्रस्य क्रमो दृश्यते। स एव क्रमः शैवागमेषु विहितः। स एव क्रमः श्रीसिद्धान्तशिखामणौ विधीयते। तथा चोक्तम्—

---

१. चन्द्रज्ञानागमः, उत्तरभागः क्रियापादः, ११.४२।

**नमःशब्दं वदेत् पूर्वं शिवायेति ततः परम् ।**
**मन्त्रः पञ्चाक्षरो ह्येष सर्वश्रुतिशिरोगतः**[१] ।। इति ।

ओङ्कारपूर्वः पञ्चाक्षरमन्त्र एव षडक्षर इति शैवागमेषु कथ्यते । तथैव श्रीसिद्धान्तशिखामणावप्युक्तम्—

**ओङ्कारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः ।**
**शैवागमेषु वेदेषु षडक्षर इति स्मृतः**[२] ।। इति ।

२. मूलं, विद्या, शिवः, शैवं सूत्रम्, पञ्चाक्षरश्चेति नामान्यस्य मन्त्रस्येति शैवागमेषूक्तम् । तथैव श्रीसिद्धान्तशिखामणावुक्तम्—

**मूलं विद्या शिवः शैवं सूत्रं पञ्चाक्षरस्तथा ।**
**एतानि नामधेयानि कीर्तितानि महामनोः**[३] ।। इति ।

३. शैवागमेषु मन्त्रस्य ऋषिश्छन्दो देवता बीजं शक्तिः कीलकं विनियोगश्चोच्यन्ते । शैवागमेषु पुनर्मन्त्राङ्गानि प्रत्यक्षरं च षोडशरूपाणि षड्रूपाणि त्रिरूपाणि चेति वैविध्येन रूपाणि निरूपितानि । श्रीसिद्धान्तशिखामणौ तु तेषां प्रपञ्चो न दृश्यते ।

४. शैवागमेषु पञ्चाक्षरमन्त्रस्य महत्त्वं बहुधा निरूपितम् । पञ्चतन्मात्राणि, पञ्चभूतानि, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चब्रह्माणि, परमात्मनः पञ्चकृत्यानि चेति सर्वाणि पञ्चात्मकानि पञ्चाक्षरमन्त्रस्य पञ्चाक्षरैर्बोध्यानीति निरूपितम् । श्रीसिद्धान्तशिखामणावपि तथैवोक्तम्—

**पञ्चभूतानि सर्वाणि पञ्चतन्मात्रकाणि च ।**
**ज्ञानेन्द्रियाणि पञ्चापि पञ्चकर्मेन्द्रियाणि च ।।**
**पञ्चब्रह्माणि पञ्चापि कृत्यानि सह कारणैः ।**
**बोध्यानि पञ्चभिर्वर्णैः पञ्चाक्षरमहामनोः ।।**
**पञ्चधा पञ्चधा यानि प्रसिद्धानि विशेषतः ।**
**तानि सर्वाणि वस्तूनि पञ्चाक्षरमयानि हि**[४] ।। इति ।

५. शैवागमोक्तदिशा षडक्षरात्मके मन्त्रे ओङ्कारः परशिवस्य शरीरम्, पञ्चाक्षरैस्तस्य

---

१. श्रीसिद्धान्तशिखामणिः, ८.७ ।
२. तत्रैव, ८.२७ ।
३. तत्रैव, ८.२३ ।
४. तत्रैव, ८.२४-२६ ।

पञ्चब्रह्मतनुत्वं च भवति। तत्र शिवस्योङ्कारशरीरत्वं नाम निष्कलस्वरूपत्वम्, पञ्चब्रह्मतनुत्वं नाम तस्य सकलस्वरूपत्वमित्युक्तं स्यात्। श्रीसिद्धान्तशिखामणावयं भावः स्पष्टं निरूपितः। तथा हि—

**प्रणवेनैव मन्त्रेण बोध्यते निष्कलः शिवः।**
**पञ्चाक्षरेण मन्त्रेण पञ्चब्रह्मतनुस्तथा॥**
**निष्कलः संविदाकारः सकलो विश्वमूर्तितः।**
**उभयात्मा शिवो मन्त्रे षडक्षरमये स्थितः[१] ॥** इति।

६. पञ्चाक्षरषडक्षरोभयात्मकस्यास्य मन्त्रस्य शिवस्य च सम्बन्धो वाच्यवाचकस्वरूप इत्युक्तं शैवागमेषु। सूक्ष्मेऽस्मिन् मन्त्रे पञ्चब्रह्मशरीरः शिवः साक्षाद् वाच्यवाचकभावेन स्थित इत्युक्तम्। अयमेव मन्त्रशिवयोर्वाच्यवाचकसम्बन्धः श्रीसिद्धान्तशिखामणावपि सम्यक् प्रतिपादितः—

**अशेषजगतां हेतुः परमात्मा महेश्वरः।**
**तस्य वाचकमन्त्रोऽयं सर्वमन्त्रैककारणम्॥**
**तस्याभिधानमन्त्रोऽयमभिधेयश्च स स्मृतः।**
**अभिधानाभिधेयत्वान्मन्त्रात् सिद्धः परः शिवः[२] ॥** इति।

७. शैवागमेषु पुरश्चरणविधिर्मन्त्रजपविधिश्च सम्यगुक्तौ। तत्र प्राङ्मुखो वोदङ्मुखो वा पद्मासनस्थः समकायशिरोग्रीवः सन् शिवध्यानपूर्वकं जपं कुर्यादित्युक्तम्। सगर्भजपे प्राणायामो विहितः। श्रीसिद्धान्तशिखामणौ पुरश्चरणविधिमनुक्त्वैव जपविधिर्निरूपितः। तथा हि—

**प्राणायामत्रयं कृत्वा प्राङ्मुखोदङ्मुखोऽपि वा।**
**चिन्तयन् हृदयाम्भोजे देवदेवं त्रिलोचनम्॥**
**सर्वालङ्कारसंयुक्तं साम्बं चन्द्रार्धशेखरम्।**
**जपेदेतां महाविद्यां शिवरूपामनन्यधीः[३] ॥** इति।

८. शैवागमेषु वाचिकोपांशुमानसभेदेन जपस्य त्रैविध्यमुक्त्वा, एकैकस्य जपप्रकारस्य लक्षणं सम्यगुक्तम्। तत्र वाचिकापेक्षयोपांशोः शतगुणत्वम्, उपांश्वपेक्षया मानसस्य

---

१. श्रीसिद्धान्तशिखामणिः, ८.२१-२२।
२. तत्रैव, ८.५-६।
३. तत्रैव, ८.२५-२६।

सहस्रगुणत्वं चोक्त्वा ततोऽपि सगर्भजपस्य पुनस्ततोऽपि सध्यानजपस्य च श्रेष्ठत्वं प्रतिपादितम्। श्रीसिद्धान्तशिखामणावपि जपत्रैविध्यं सलक्षणमुक्त्वा तारतम्यं च शैवागमोक्तदिशैव प्रदर्शितम्। तत्र सगर्भसध्यानजपयोरुल्लेखो नास्ति[१]।

९. शैवागमोक्तदिशा सर्वास्ववस्थासु पञ्चाक्षरमन्त्रः सिद्ध्यति। अन्ये मन्त्राः सर्वे तत्क्रियाश्चाऽऽयासबहुलाः, पञ्चाक्षरमन्त्रस्तु विनाऽऽयासेन फलप्रदः। एवमेव श्रीसिद्धान्तशिखामणावुक्तम्—

**अशुद्धो वा विशुद्धो वा सकृत्पञ्चाक्षरेण यः।**
**पूजयेत्पतितो वापि मुच्यते नाऽत्र संशयः।।**
**अन्येऽपि बहवो मन्त्रा विद्यन्ते सकलागमे।**
**भूयो भूयः समभ्यासात् पुरुषार्थप्रदायकाः।।**
**एष मन्त्रो महाशक्तिरीश्वरप्रतिपादकः।**
**सकृदुच्चरणादेव सर्वसिद्धिप्रदायकः**[२] ।। इति।

१०. शैवागमोक्तदिशा द्विजेभ्य एव षडक्षरमन्त्र उपदेष्टव्यः, स्त्रीशूद्रेभ्यश्च प्रणवं विना पञ्चाक्षरमन्त्र उपदेष्टव्य इति नियमोऽस्ति। परन्तु श्रीसिद्धान्तशिखामणौ तादृशनियमो नास्ति। चन्द्रज्ञानागमे स्त्रीशूद्रेभ्यो नमोऽन्तः पञ्चाक्षरमन्त्र उपदेष्टव्य इत्युक्तम्। तत्र क्रमभङ्गेन तस्य मन्त्रत्वमेव कथमिति सन्देहः। केवलं पञ्चाक्षरमन्त्र एव उपदेष्टव्य इत्येव साधीयान् पन्थाः। इति शम्।

●

---

१. श्रीसिद्धान्तशिखामणिः, ८.२७-३२
२. तत्रैव, ८.३८, ४०-४२

# वीरशैवानां कर्मज्ञानसमुच्चयः

*को. रं. बसवराजुः*

**नमस्ते सच्चिदानन्दविज्ञानघनमूर्तये ।**
**अनावृताय भो शम्भो गुरवे बुद्धिरूपिणे ।।**

उपनिषन्मन्त्राणां भेदे तात्पर्यमिति द्वैतवादिनः, अभेदे इत्यद्वैतवादिनः, भेदाभेद इति विशिष्टाद्वैतवादिनश्च वदन्ति। एवं केचित् ज्ञानप्रधानमिति, अन्ये कर्मप्रधानमिति, अपरे तु उभयप्रधानमिति प्रतिपादयन्ति।

"ज्ञानादेव तु कैवल्यम्" इत्यद्वैतसिद्धान्तिनः। इदमत्राकूतम्—यथा रज्ज्वज्ञानकल्पिता सर्पभ्रान्ती रज्जोर्यथार्थज्ञानान्निवर्तते, तथा ब्रह्मणो यथार्थज्ञानाद् ब्रह्माज्ञानकल्पितः सर्वोऽपि प्रपञ्चो निवर्तते। इदमेव कैवल्यम्। यथा चोक्तम्–अविद्यास्तमयो मोक्षः, सा संसार उदाहृतः' इति।

द्वैतसिद्धान्तेऽपि ज्ञानादेव मोक्ष इति। ज्ञानं चात्राऽपरोक्षज्ञानं विवक्षितम्। अपरोक्षज्ञानानन्तरमपि ज्ञानी स्वविहितकर्म कुर्यादेव। अन्यथा मोक्षे आनन्दह्रासो भवति। एतन्मते स्वस्वसाधनानुसारेण आनन्दे तरतमभावो विद्यत एव।

विशिष्टाद्वैतवेदान्तेऽपि ज्ञानमेव मोक्षकारणम्, परन्तु ज्ञानकर्मणोरङ्गाङ्गिभावो वर्तते। अर्थात् कर्मसमुच्चितमेव ज्ञानं मोक्षसाधनमिति।

वीरशैवसिद्धान्ते तु रज्जोः तन्तुत्रयमिव ज्ञानं कर्म भक्तिश्चापि प्राधान्येन मुक्तिकारणम्। अर्थादेते ज्ञानकर्मसमुच्चयवादिनः। अत्र तु वीरशैवानां कर्मज्ञानसमुच्चयवादे आगमा ईशावास्यादिमन्त्राः, श्रीकरभाष्य-सिद्धान्तशिखामणिरित्यादयो ग्रन्थाश्च प्रमाणपदवीमारुहन्ति। तथा च सहस्त्रप्रमाणप्रमितोऽस्मदीयः सिद्धान्तः। तत्रापि पारमेश्वरागमे प्राधान्येन कर्मज्ञानसमुच्चयविषयो बहुषु स्थलेषु प्रतिपादितो वर्तते।

## अथ कर्मशब्दार्थनिरूपणम्

वीरशैवसिद्धान्ते कर्मपदस्य न पुण्यपापहेतुत्वं नापि मुक्तिप्रतिबन्धकत्वं न वा

पुनर्जन्मकरणत्वमिति वाच्यम्, ''बाह्यं यागादिनोच्यते'' इत्यनेन निषेधात्। किन्तु तस्य महालिङ्गार्चनार्पणादिक्रियेत्यर्थः, पूजा तस्य क्रियोच्यते, ''समर्चाकर्म विज्ञेयम्'' इत्युक्तत्वात्।

तच्च कर्म द्विविधम्–पशुकर्म पतिकर्मेति च। येन कर्मणा जन्तुर्बध्यते, यस्मिन् कर्मणि फलसम्बन्धो वर्तते वा तदेव पशुकर्मेति। पशुविशसनरूपयागादयो वा। यच्च कर्म संसारिणं पुरुषं भवबन्धनान्मोचयति, तत्पतिकर्मेति। शिवलिङ्गस्य यजन-भजनार्चनार्पणप्रसादग्रहणादीनि तानि सन्ति। अत्र तु पतिकर्म एव प्रशस्तम्। अन्यस्य बन्धकत्वान्न प्राशस्त्यम्। एवं चेत् सामान्यतः कर्मण आनर्थक्यं स्यादिति चेन्न, शिवज्ञानसिद्ध्यर्थं कर्मणां विहितत्वादिति ब्रूमः। तर्हि पशुकर्म पतिकर्म स्यात् ? इति चेत्, अस्तु नाम, को नेत्याह ? तथा हिं आगमवाक्यम्– **''तस्माच्छास्त्रं प्रमाणं हि कार्याकार्यव्यवस्थितौ''** इति।

## ज्ञानशब्दार्थविवरणम्

सामान्यतो ज्ञानमिति कश्चन सविषयकपदार्थः। तच्च ज्ञानं लौकिकमलौकिकमिति द्विविधम्। अत्र लौकिकस्य प्रकृतानुपयोगात् तन्न निरूप्यते। अलौकिकं ज्ञान-मागमजन्यमित्युच्यते। आगमाश्चात्र वीरशैवागमा इति। पारमेश्वरागमे ज्ञानशब्दस्य एते अर्थाः प्रदर्शिताः–

**'शिवागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम्।**
**पशु-पाश-पतिज्ञानं ज्ञानमित्यभिधीयते'।।**
**''शिवाद्वैतपरं ज्ञानं ज्ञानमित्युच्यते बुधैः''।।** इति।
**'आवरणभङ्गानुकूलो व्यापारो ज्ञानम्'।**

अत्र व्यापारः कर्मविशेष एव। ज्ञानस्यापि कर्मविशेष एव। ज्ञानस्यापि कर्मविशेषतया व्यापारत्वेन व्यवहारः कृतः। तथापि पशुपाशपतिज्ञानमेव मुख्यतया ज्ञानशब्दार्थत्वेन आगमकारैरभिधीयते।

## समुच्चयपदार्थनिरूपणम्

समुच्चयो नाम (सम् + उद् + चिञ्) 'बहूनां युगपद्भावभाजां गुम्फः'। अत्र तु परस्परसापेक्षाविशिष्टयोः कर्मज्ञानयोरेकघटकत्वेन सत्त्वम्। तच्च विरोधानवगाहिज्ञाना-वच्छिन्नत्वं स्यात्। कर्मज्ञानयोः सहयोगः सहभावो वेति वक्तुं शक्यते। समुच्चयवादे मुख्यतया मतद्वयमस्ति विषमसमुच्चयः समसमुच्चयश्चेति। तत्र विषमसमुच्चय-वादिनामयमाशयः– कर्मणो मोक्षसाधनत्वेऽपि न साक्षात्, किन्तु ज्ञानाङ्गतया। ज्ञानस्यैव प्राधान्यम्। तथापि ज्ञानकर्मणोः समुच्चयो नास्तीति न। अत एव विषम इति विशेषणम्। तेऽङ्गाङ्गिभावसमुच्चयवादिनश्चेति कथ्यन्ते।

समसमुच्चयवा॒ऽदिनां मते कर्मणो ज्ञानस्यापि समप्राधान्यम्। न कर्म ज्ञानाङ्गं न वा ज्ञानं कर्माङ्गम्। पूर्वस्मिन् मते तु कर्मणो ज्ञानाङ्गत्वम्। अत्र तु नोभयोरपि परस्पर-मङ्गाङ्गिभावः। अत एव– "अपां सोमम् अमृता अभूम" इति श्रुतिरप्युपपद्यते। पारमेश्वरागमेऽप्यस्मिन् विषयेऽनल्पानि प्रमाणान्युदितानि। कानिचिद् उत्तरत्र दर्शयिष्यामः। ज्ञानकर्मणोः समप्राधान्यादेव सम इति पदं नानर्थकम्[१]।

पारमेश्वरागमे शैवानां प्रथममङ्गाङ्गिभावसमुच्चयं निरूप्य तदनन्तरं वीरशैवानां समसमुच्चयः प्रतिपदितः। यथा–

**ज्ञानाधिकारसिद्ध्यर्थमाचरेत् कर्म चोदितम्।**
**ज्ञाननिष्ठाबलेनैव त्यजेत् कर्माणि नान्यथा।।**
**विना ज्ञानाधिकारेण उक्त्या कर्माणि यस्त्यजेत्।**
**न याति पारं दुःखस्य विषयेष्ववसीदति[२]।।** इति।

आगमशास्त्रविहितकार्यानुष्ठानेन शिवज्ञानस्य अधिकारी भूत्वा तज्जन्यज्ञानबलेनैव कर्माणि त्यजेत्। यो नरो ज्ञानसिद्धिं विना कर्माणि त्यजति, स दुःखस्य पारं न याति।

अत्र कर्मत्याग इति कर्मफलत्याग इत्यर्थः। तत्र तु कर्मणस्त्यागः तथा कर्मणो योगः, उभावपि मोक्षसाधनमेव। शिवलिङ्गार्चनार्पणप्रसादग्रहणादिपतिकर्मानुष्ठानमेव कर्मयोगः, स्वर्गादिफलापेक्षाराहित्यमेव कर्मत्याग इत्युच्यते शिवशासनज्ञैः। अत एवोक्तं गीतायामपि— **संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ"**[३] इति।

**वीरशैवमतस्थस्य ज्ञानयोगो हि साधनम्।**
**विना ज्ञानं न योगः स्यान्न ज्ञानं योगतो विना।।**
**न विना ज्ञानयोगाभ्या वीरशैवमताश्रयः।**
**सन्तारणाय भवति च्यवते नात्र संशयः[४]।।**

---

१. अपि च– साध्यद्विकसाधनद्विकसमुच्चयः, पूर्णसमुच्चय इत्यादयः समुच्चयभेदाः सन्ति। तत्रानिष्टपरिहारसाधनं कर्म, इष्टप्राप्तिसाधनं ज्ञानमिति द्विकसमुच्चयवादिनः (भास्करमतम्)। तथा प्रतिबन्धकनिवृत्तिकारणं कर्म, इष्टप्राप्तिसाधनं ज्ञानमिति पूर्णसमुच्चयवादिनः (यादवप्रकाशमतम्)।

२. पारमेश्वरागमः, सप्तमः पटलः, श्लोकः- ३०. ३२।

३. भगवद्गीता, अध्यायः - ५ श्लोकः - २।

४. पा. आ., सप्तमः पटलः, श्लोकः - ३७।

यः पुरुषो वीरशैवमते निष्णातः, तस्य तु साधनं ज्ञानं योगश्च । यतो हि ज्ञानं विना न भवति योगः, तथैव योगं विना न भवति ज्ञानम् ।

नन्वत्र ज्ञानं विना न योगः, न योगं विना ज्ञानमित्युक्तम्, कथमिदम् ? अन्योन्याश्रयादिति चेत्, मैवम् । यथा शाङ्करसिद्धान्ते जीवब्रह्मभेदस्य आविद्यकत्वेऽप्यविद्यया जीवब्रह्मविभागसिद्धौ जीवस्य सिद्ध्या अविद्याया आश्रयसिद्धिः अविद्यासिद्धौ च जीवसिद्धिः । एवमेव अविद्याया जीवब्रह्मविभागस्यानादित्वेऽप्यविद्याधीनत्वं जीवब्रह्मविभागस्य, तथैवात्रापि मन्तव्यम् । न प्रतिबन्धकग्रहणमात्रेण दोषपरिहार इति चेत्, सत्यम्, वृक्षबीजन्यायेन ज्ञानकर्मणोरुभयोरप्यनादित्वेन यथा नान्योन्याश्रयः, तद्वदत्रापि ।

अत्र योगोऽपि शिवसुस्थितचेतसो वृत्त्यन्तरनिरोधरूपः कर्मविशेष एव । ज्ञानं तु पशुपाशपतिज्ञानम् । ज्ञानयोगयोः परस्परापेक्षा वर्तते, **''न ह्येकपक्षो विहगः प्रयाति''**, **''अपश्यन् अन्धको दग्धोऽगच्छन् पङ्गुश्च दह्यते''** इति दृष्टान्तवत् । अत्र साधकः सत्य-अहिंसा-अस्तेय-आस्तिक्यबुद्धि-श्रद्धा-यमनियम-अध्ययन-अध्यापन-यजन-याजन-वैराग्यादिसदाचारेण ज्ञानं सङ्गृह्य ज्ञानयोगी भवति । एवं ज्ञानयोगी भूत्वा कर्मयोगमभ्यस्यति । **''पुण्यापुण्यात्मकं कर्म मुक्तेस्तत्प्रतिबन्धकम्''**, **''फलकामनया कर्म करणं प्रतिपद्यते''** इत्यादिशिवागमार्थजन्यं विज्ञानं लब्ध्वा कर्मबन्धं प्रहास्यति । पुण्यापुण्ये च योगं विवर्जयति च । एवं च कर्मफलं त्यक्त्वा कर्ममात्रेण शङ्करं सम्पूज्य शिवसायुज्यं प्राप्नोति अन्यथा दुःखस्य पारं न याति । अत एवोक्तम्– **'कर्मज्ञानोभयभ्रष्टो निमग्नो दुःखसागरे'**[१] इति । अतो वीरशैवाः कर्मज्ञानरता भवेयुरिति शिवशासनमस्ति । तत्र च–

**''विदिते शिवसात्मैककर्मणि ज्ञानयोगिनः ।**
**न यजन्ति शिवं युक्ताः समलोष्टाश्मकाञ्चनाः''**[२] ।।

इति ज्ञानयोगिनां न किञ्चिदप्यस्त्यनुष्ठेयं कर्म, नित्यमुक्तत्वात् । अतस्ते न यजन्ति शिवमिति । एतच्चिन्त्यम्, **''न यजन्ति शिवम्''** इत्यनेन ते कर्मत्यक्ता इति न, किन्तु तेषां कर्मणां नास्ति विधिनिषेध इति तात्पर्यम् । उक्तं च आगमे–

**'न किञ्चिज्ज्ञानिनः कर्मनिषेधो विधिरेव वा'**[३] इति । अपि च, न केवलं कर्मज्ञाने मोक्षस्य साधनं भवतः, किन्तु भक्तिसंलग्ने कर्मज्ञाने एव मोक्षसाधनमिति

---

१. पा. आ., अष्टमः पटलः, श्लोकः - ६७ ।
२. पा. आ., द्वादशः पटलः, श्लोकः - ९ ।
३. पा. आ., द्वाविंशः पटलः, श्लोकः - ६७ ।

विशेषविचारोऽप्यत्र पगारमेश्वरे विविच्यते— **"न कर्म साधनं मुक्तेर्नभक्तिर्ज्ञानमप्युत"** इत्यादिना[१] उड्डयने पक्षिणः पक्षद्वयमपि नियतमेव, तथापि दिक्सूचकं पुच्छं विना गन्तव्यं स्थानं न प्राप्नोति हि। अत्र भक्तिः पुच्छवत्। अतोऽभक्तिः कर्म मुक्तेर्न साधनम्, तथा अभक्तिर्ज्ञानमपि। अपि च भक्त्यभ्यासवशात् कर्मज्ञाने दृढतरे भवतः। एवं च भक्तिसमाश्रितः कर्मज्ञानसमुच्चय एव मोक्षसाधनम्। अत्रोक्तं च—

**विशेषमत्र वक्ष्यामि शृणु देवि समाहिता।**
**कर्मभक्तिचिदात्मानस्त्वधिकारास्त्रयः स्फुटाः।।**
**आलम्बः कामिनः कर्म ज्ञानं निष्कामिनः परम्।**
**विरक्तस्य त्वसक्तस्य भक्तियोगः शिवे मयि**[२] ।। इति।

मुक्तेस्त्रयो मार्गाः सन्ति, कर्ममार्गः, ज्ञानमार्गः, भक्तिमार्गश्चेति। सकामिनां कर्ममार्गः, निष्कामिनां ज्ञानमार्गः, विरक्तानां वीरशैवानां तु कर्मज्ञानविशिष्टभक्तिमार्ग एव विहितः।

उपनिषत्सु सामान्यतः सर्वत्रापि ज्ञानकर्मसमुच्चय एव प्रतिपादितः। तथा हि—

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।**
**ततो भूय इव ते य उ विद्यामुपासते**[३] ।।

अत्र विद्याशब्दो ज्ञानार्थकः, अविद्याशब्दोऽपि न विद्या अविद्या इति व्युत्पत्त्या विद्याभिन्नमोक्षसाधनीभूतकर्मार्थे वर्तते, नञः स्वभिन्नसदृशपदार्थकत्वस्य 'अब्राह्मणमानय' इत्यादौ दृष्टत्वात्।

ये जना अविद्यामुपासते, केवलं स्वस्वरूपज्ञानभिन्नयजनभजनादिपतिकर्माण्यनुतिष्ठन्ति ते अन्धो यथा गर्तं प्रविशति तथा आणवमायीयकार्मिकमलरूपतमः प्रविशन्ति, संसारचक्रे भ्रमन्ति। ये च विद्यामुपासते कायवाङ्मनसः कर्म हित्वा आत्मस्वरूपज्ञानरताः तेऽपि पङ्गुर्यथाग्निं तथा तस्मादधिकं मलरूपं तमः प्रविशन्ति। एवं च ज्ञानकर्मान्यतरासक्तानां न किञ्चिदपि प्रयोजनम्। अतः—

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते**[४] ।।

---

१. पा. आ., द्वाविंशः पट्टलः, श्लोकः - ७२।
२. तत्रैव, श्लोकः - ६४।
३. ईशावास्योपनिषत्।
४. तत्रैव।

अस्मिन् मन्त्रेऽविद्याया अनिष्टनिवर्तकत्वमुक्त्वा विद्याया अमृतसाधकत्वमुक्तम्। ये विद्यामात्मस्वरूपं ज्ञानं तथा अविद्यां विद्याभिन्नां शिवलिङ्गयजनभजनादिक्रियां चोभयं साक्षाद् मोक्षसाधनत्वेन जानन्ति, तेऽविद्यया पतिकर्मणा मृत्युं मलत्रयं तीर्त्वा विद्यया स्वस्वरूपज्ञानेनामृतत्वं प्राप्नुवन्तीति मन्त्रार्थः।

तत्र विचार्यते– मोक्षप्रतिबन्धकं कर्म, तथा मोक्षसाधनं ज्ञानम्, इत्येतयोः परस्परविरोधो वर्तते, **''कर्मणा बध्यते जन्तुः'' ''तमेव विदित्वाऽतिमृत्युमेति''** इत्यादिस्मृतिश्रुतिषु दृष्टत्वात्। अतः कथं समसमुच्चयत्वम्? अत्र समाधीयते– अत्र च कर्म न मीमांसोक्तदिशा यज्ञयागादिकम्, तस्य सकामकर्मत्वेन मोक्षप्रतिबन्धकत्वात्, तस्य निष्कामत्वेऽपि न साक्षान्मोक्षसाधनत्वम्। अत एव ईदृशस्य कर्मणो ज्ञानकर्मसमुच्चयशरीरे न प्रवेशः। एवं चात्र कर्मशब्देन शिवपूजासाधनभूतानि विभूतिरुद्राक्षधारणादीनि पतिकर्माणि विवक्षितानि। तानि ज्ञानानुविद्धानि च। तेषां च मोक्षं प्रति ज्ञानवत् साक्षात्कारणत्वान्न विरोधः।

अपि च, ज्ञानाग्निना दग्धकर्मणो न ज्ञानसामानाधिकरण्यम्, **''ज्ञानाग्निदग्धं कर्म न प्ररोहेत् कथञ्चन''**, **''क्षीयन्ते चास्य कर्माणि''** इत्याद्यागमवाक्यश्रवणात्। अत्र दग्धं कर्म कर्मक्षयो वा इत्यस्य स्वकार्यानुत्पादकत्वेन दग्धत्वं चित्रपटवद् भोगासमर्पितत्वमेवेति। अत एवोक्तमनुभवसूत्रे–

**अद्वैतभक्तियुक्तस्य योगिनः सकलक्रिया।**
**अस्ति दग्धपटन्यायात् क्रियामात्रा तु न क्रिया[१]॥**

अतो ज्ञानसामानाधिकरण्ये न च बाधः। एवं च– **''नह्युत्पन्नस्य कर्मारम्भो युक्तः''** इत्युक्तत्वात्। ज्ञानिनः करणीयं कर्म अस्ति न वेति प्रश्नः। अत्रोच्यते– ज्ञानिना वा अज्ञानिना वापि कर्म करणीयमेव। अन्यथा तस्यानिष्टनिवृत्तिः कथम्? न च वाच्यं ज्ञानिनो नास्त्यनिष्टमिति चेत्, तेनापि विभूतिरुद्राक्षधारणशिवप्रसादादिकं कर्म कर्तव्यमेव। अन्यथा लोकसङ्ग्रहो न भवति। लोकसङ्ग्रहो न भवति चेत्, तदा लौकिकानां विरुद्धाचारेण तज्जन्यपापलेपः स्यादेव ज्ञानिनः। अत एव भगवता कृष्णेनाप्युक्तम्–

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥**

---

१. शिवानुभवसूत्रम्।

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः**[१] ।। इति ।

श्रीरेणुकभगवत्पादैरप्युक्तम्—

**ज्ञानामृतेन तृप्तोऽपि योगी धर्मं (कर्म) न सन्त्यजेत् ।**
**आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः** ।। इति ।

अतो ज्ञानिनापि कर्म करणीयमेव[२] ।

श्रीकरभाष्यकृद्भिः श्रीपतिपण्डितैर्भाष्ये तृतीयाध्याये चतुर्थपादे विहिताधिकरणे कर्मज्ञानसमुच्चयविचार एवं प्रस्तूयते । तत्र सूत्रम्– "**सहकारित्वेन च**"[३] इति । "**विद्यां चाविद्यां च यस्तद्वेदोभयं सह**", "**ब्रह्मवित् पुण्यकृच्च**", "**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्**" इत्यादिषु धर्मब्रह्मोभयसहकारित्वेन मोक्षावगमाद् ज्ञानकर्मसमुच्चयानुष्ठानं सर्वेषामाश्रमिणां विधेयमिति ।

सकलशिवागमसारे श्रीसिद्धान्तशिखमणावपि ज्ञानकर्मसमसमुच्चयवाद एव अग्रेसरीकृतः । यथा हि—

**प्रकाशते यथा नाग्निररण्यां मथनं विना ।**
**क्रियां विना तथान्तःस्थो न प्रकाशो भवेच्छिवः**[४] ।।

अत्र क्रियायाः कारणेनैवान्तःस्थः शिवः प्रकाशत इत्युक्तम् । उदाहरणं तु 'नाग्निररण्यां मथनं विना' इति । एवं च मथनात्मकक्रियायाः शिवप्रकाशनकारणत्वमुक्तम् । अतोऽत्र कर्मणः प्राधान्यम् । एवमेव—

**अन्धो यथा पुरःस्थानि वस्तूनि च न पश्यति ।**
**ज्ञानहीनस्तथा देही नात्मस्थं वीक्षते शिवम्** ।।

अपि च—

**दीपं विना यथा गेहे नान्धकारो निवर्तते ।**
**ज्ञानं विना तथा चित्ते मोहोऽपि न निवर्तते**[५] ।।

---

१. भगवद्गीता, ३.२२, २३ ।
२. सिद्धान्तशिखामणिः O. R. I. मैसूर. परिच्छेदः २६ श्लोकः १०९२ ।
३. श्रीकरभाष्यम्- अ. ३ पा. ४. सू. ३३. अधि-विहिताधिकरणम् ।
४. सि. शि., परि. २६. श्लोकः २०२७ ।
५. तत्रैव, परि. २६. श्लोकः २०६७ ।

अत्र श्लोकद्वये ज्ञानस्यैव प्राधान्यमुक्तम्। अतः कर्मज्ञानौ परस्परसापेक्षे—

**अन्धपङ्गुवदन्योन्यं सापेक्षे ज्ञानकर्मणी।**
**फलोत्पत्तौ विरक्तस्तु तस्मात्तद्द्वयमाचरेत्।।**
**न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया।**
**अपश्यन् अन्धको दग्धोऽगच्छन् पङ्गुश्च दह्यते[१] ।।**

अत्र तु क्रियारहितं ज्ञानं वा ज्ञानरहिता क्रिया वा न मुक्तिरूपफलोत्पत्तौ कारणम्। अतो ज्ञानकर्मणो अन्धपङ्गुवत् परस्परापेक्षे। अन्धस्य साहाय्यं विना पङ्गुः अग्निना दग्धो भवति तथा पङ्गुं विनान्धो गर्ते निपतति। अतोऽन्धस्य स्कन्धमारुह्य पङ्गुर्मार्गं निर्दिशति। अन्धः पङ्गुं वहन् गच्छति। तेन उभावपि सुरक्षितं स्थानं यातः। अत्र कर्मरहितं ज्ञानं पङ्गुवत्, तथा ज्ञानरहितं कर्म अन्ध इव। अपि च–

**ज्ञानप्रधानं न तु कर्महीनं कर्मप्रधानं न तु चिद्विहीनम्।**
**तस्माद्द्वयोरेव भवेत् प्रसिद्धिर्न ह्येकपक्षो विहगः प्रयाति[२] ।।**

कर्मज्ञाने पक्षिणः पक्षद्वयमिव। यथा पक्षी एकेन पक्षेणैव न प्रयाति, तथा समुच्चयव्यतिरेकेण ज्ञानराहित्यविशिष्टकर्मणा वा कर्माभावविशिष्टज्ञानेन वा न हि मुक्तिः। शिवयोगिशिवाचार्याः कर्मज्ञानोभयं "भावे" समरसं प्राप्नुयादिति निर्दिशन्ति। पारमेश्वरागमेऽपि कर्मज्ञानोभयं भक्त्या संयुज्येदिति पूर्वमेवात्रोक्तम्। सिद्धान्ते– भावो मानसचेष्टात्मा परिपूर्णः शिवाश्रय[३] इत्युक्तम्। कैश्चिदयमेव भक्तिरिति चाभिधीयते। भावोऽयं कर्मज्ञानयोर्मध्ये मणिरिवास्ति। यथा कर्म भावो ज्ञानम्। अत एव स्थलविवेचनसन्दर्भे आचार्यैरित्थमियं व्यवस्था कृता–

क्रियालिङ्गस्थलम् → भावलिङ्गस्थलम् ← ज्ञानलिङ्गस्थलम्।

क्रियागमस्थलम् → भावागमस्थलम् ← ज्ञानागमस्थलम्।

क्रियाचारस्थलम् → भावाचारस्थलम् ← ज्ञानाचारस्थलम्।

क्रियानिष्पत्तिस्थलम् → भावनिष्पत्तिस्थलम् ← ज्ञाननिष्पत्तिस्थलम्।

क्रियाप्रकाशस्थलम् → भावप्रकाशस्थलम् ← ज्ञानप्रकाशस्थलम्।

क्रियाशून्यस्थलम् → भावशून्यस्थलम् ← ज्ञानशून्यस्थलम्।

---

१. सि. शि., परि. २६. श्लोकः २०३२।
२. शिवागमः।
३. सि. शि., परि. २६. श्लोकः १०९४।

एवं कर्मभावज्ञानानि आगम-आचार-निष्पत्ति-प्रकाश-शून्यत्वेन क्रमविकासं प्राप्य लिङ्गसिद्धौ परिणमन्ते। भावहीनकर्मणा ज्ञानेन वा न फलोत्पत्तिः। यथा—

**अर्थहीना यथा वाणी पतिहीना यथा सती।**
**श्रुतिहीना यथा बुद्धिः भावहीना तथा क्रिया।।**
**चक्षुर्हीनो यथा रूपं न किञ्चिदीक्षितुं क्षमः।**
**भावहीनस्तथा योगी शिवं द्रष्टुं न ईश्वरः[१] ।।**

अस्यार्थस्तु स्फुट एव। तेन—

**भावकर्मसमायुक्तं ज्ञानमेव विमुक्तिदम्।**
**शिवोऽहमिति भावोऽपि शिवतापत्तिकारणम्।।**
**न ज्ञानमात्रं नाचारो भावयुक्तः शिवो भवेत्[२] ।।**

एतैः सहयोगं विना एकेन कर्मणा ज्ञानेन भावेन वा न सुखप्राप्तिः। यथोदाहरणम्— अत्र पक्वफलमेकमस्ति। तस्य रसास्वादस्तु फलमिदमिति ज्ञानेन वा, भुक्तं फलमिति कर्मणा वा केवलं भावेन वापि न लभ्यते। फलस्य रसानन्दप्राप्तिस्तु तस्य ज्ञाना-स्वादनक्रियाभावा मेलनेनैव भवति, तथैव शिवाद्वैतानन्दोऽपि शिवोऽहमिति ज्ञानेन, अर्चना-अर्पणध्यानजपादिभिः क्रियाभिः, शिवाश्रितशुद्धमानसचेष्टया च (भावेन) लभ्यते। अतः कर्मभावज्ञानसंयोगादेव मोक्षप्राप्तिरिति सिद्धान्तोऽत्र स्वीक्रियते।

इदमत्र सिद्धान्तरहस्यम्– वीरशैवसिद्धान्तः सकलोऽपि ज्ञानकर्मणोः समसमुच्चयात्मक एव। इदं च धर्मस्य त्रिष्वङ्गेषु स्फुटं दृश्यते। तथा हि वीरशैवधर्मस्याष्टावरणं पञ्चाचारः षट्स्थलं चेति त्रीण्यङ्गानि वचनागमेषु वर्णितानि।

अष्टावरणमपि बहिरष्टावरणमन्तरष्टावरणमिति द्विविधम्। बहिरष्टावरणं कर्म-प्रधानात्मकम्, अन्तरष्टावरणं ज्ञानस्वरूपभूतम्। तत्रापि गुरुलिङ्गजङ्गमाचरणे निजाचरणं तथा सम्बन्धाचरणमिति द्वयमस्ति। तत्र निजाचरणं नाम साक्षाद् यद्गुरोर्जङ्गमस्य वा पादोदकादिस्वीकरणम्। यदि गुरुजङ्गमौ न लभ्येते चेत्, स्वेष्टलिङ्गे गुरुजङ्गमभावनां कल्पयित्वा पादोदकादिस्वीकरणं सम्बन्धाचरणमिति कथ्यते। वीरशैवसिद्धान्तेऽर्पणतत्त्व-मतीव प्रमुखं स्थानं भजते। अर्पणं द्विविधम्—क्रियार्पणं ज्ञानार्पणं चेति। तत्रापि क्रियार्पणस्य ज्ञानार्पणस्य च समप्राधान्यमिति। क्रियार्पणं नाम स्वयं प्राप्तस्य पदार्थस्य

---

१. सि. शि., परि. २६. श्लो. १०४२-४३।
२. सि. शि., परि. २६ श्लो. २०३९।

रूपरुचितृप्तीनामिष्टप्राणभावलिङ्गेषु समर्पणम्। ज्ञानार्पणं च स्वयं प्राप्तस्य रूपरसगन्धाद्यात्मकस्य विषयस्य तत्तदिन्द्रियाधिष्ठितलिङ्गेषु समर्पणम्। अतोऽष्टावरणानि ज्ञानकर्मसमुच्चयात्मकानि। एवमेव पञ्चाचारा अपि ज्ञानक्रियात्मका एव। आचारशब्दः आङ्पूर्वकगतिभक्षणार्थकचर्धातोर्व्युत्पन्नः। ये गत्यर्थकास्ते ज्ञानार्थका इति वैयाकरणाः। ततश्चर्धातोर्ज्ञानं गमनमप्यर्थः। गमनं चात्र क्रियाविशेषः। अतः 'आचार'शब्द एव ज्ञानकर्मसमुच्चयात्मकः। अत एव—

**भ्रमणं रेचनं स्यन्द ऊर्ध्वज्वलनमेव च।**
**तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते[१]॥**

इत्यादिना कर्माणि पञ्चधा निरूपितानि। एतेऽर्था गमनादेव लभ्यन्ते। अतो गतिः कर्म। एवं च आचारशब्दो ज्ञानकर्मसमुच्चयात्मक इति न्यायवैशेषिकानामपि सम्मतम्। एवं च आचाराः पञ्च ज्ञानक्रियासमुच्चयात्मका इति सर्वतीर्थङ्कराणां सम्मतम्।

षट्स्थलाचारेषु भक्तो महेशः, प्रसादी प्राणलिङ्गी, शरणः, ऐक्यमिति सोपानरूपेण वर्तन्ते साधकाः। नैतावता साधकः पूर्वक्रमे सोपानीभूतस्थलानि परित्यजेदित्यर्थः। तदपरिहाय स्थलान्तरं गन्तव्यमिति वीरशैवसिद्धान्तरहस्यम्। सिद्ध्यनन्तरं च सिद्धो यत्र कुत्रापि षट्स्थलेष्वेकस्मिन् सर्वानन्यान् पञ्चान् उपसंहृत्य लिङ्गाङ्गसामरस्यं प्राप्तुं स अधिकारी भवति। तथा हि तोण्टदसिद्धलिङ्गेश्वरस्य वचनम्—

**प्रथमदल्लि भक्तनादेनेम्बरु द्वितीयदल्लि महेश।**
**तृतीयदल्लि प्रसादी चतुर्थदल्लि प्राणलिङ्गी॥**
**पञ्चमदल्लि शरण षष्ठदल्लि ऐक्यनादेनेम्बरु।**
**आरूस्थलवमीरि निरवयस्थलवोन्दिनेम्बरु॥**
**इदु खण्डितषट्स्थलज्ञान निर्णयवल्ल।**
**आवास्थलवनङ्ग गोण्डरू आ स्थलदल्लि॥**
**षड्विधलिङ्गदल्लि बेरसि।**
**बेरिल्लदिरबल्लडे सद्भक्तनेम्बेनय्या॥**
**महालिङ्गगुरुशिवसिद्धेश्वरप्रभुवे[२]** ॥ इति।

इदं पद्यजातं (वचनम्) कर्नाटकभाषायां वर्तते। अस्य चाभिप्राय इत्थमस्ति—

---

१. कारिकावली।

२. तोण्टदसिद्धलिङ्गेश्वरवचनम्, सं. ७।

आदौ भक्तः, द्वितीये महेशः, तृतीये प्रसादी, चतुर्थे प्राणलिङ्गी, पञ्चमे शरणः, अन्तिमे तु ऐक्यवानिति व्यपदिश्यते।

सप्तमं निरवयवस्थलमपि प्राप्ता वयमिति केचिद्वदन्ति, परन्त्विदं स्थलज्ञाननिर्णयत्वेन नाङ्गीकुर्मः। यस्तु सिद्धः पूर्वोक्तदिशा यस्मिन् कस्मिन् च स्थलेऽन्यानि स्थलान्युपसङ्गृह्य आचरन् वर्तते, स एव षट्स्थलज्ञानीति। तत्रापि प्रत्येकं प्रत्येकमपि पुनः षड्धा विभक्तो वर्तते। यथा हि– भक्तस्य भक्तः, भक्तस्य महेशः, भक्तस्य प्रसादी, भक्तस्य प्राणलिङ्गी, भक्तस्य शरणः, भक्तस्य ऐक्यवान् इति। तथैव महेशस्थलेऽपि महेशस्य महेशः, महेशस्य भक्तः, महेशस्य प्रसादी। सर्वेष्वप्येवमेव। एवं रीत्या शैवागमेष्ववान्तरस्थलानां व्यवस्था निरूपिता। षट्स्थलानामप्यादौ स्थलत्रयं कर्मप्रधानम्, अन्ते च स्थलत्रयं ज्ञानप्रधानमिति। सिद्धान्तशिखामणौ तदेवं निरूपितम्—

**भक्तो माहेश्वरश्चैव प्रसादीति च कीर्तितः।**
**कर्मप्राधान्यमेवात्र ज्ञानयोगस्य कथ्यते**[1] ।। इति।

एवं च शिवशक्त्योर्ज्ञानक्रियात्मकत्वेन सम्पुटीकरणं शास्त्रेषु बहुषु स्थलेषु दृश्यते। लिङ्गाङ्गसामरस्यमिति पदमप्यमुमेवार्थं वदति। लिङ्गमिति ज्ञानम्, तथा अङ्गमिति कर्मेति। तथा हि समग्रमपि वीरशैवदर्शनं ज्ञानकर्मणोः समसमुच्चयमेव वदतीत्यत्र न संशयलेशः। वीरशैवधर्मे पूर्वोक्तदिशा आचारशब्दो ज्ञानक्रियात्मक एव। अतः साधक आदेहपातमाचारवान् भवेदित्याचार्यस्य आदेशः। उक्तं च—

**ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।**
**तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्** ।। इति।

अत्र शिवशास्त्रमेव परमं प्रमाणम्। तदुक्तं पारमेश्वरागमे—

**यः शास्त्रविधिमुत्सृत्य वर्तते कामचारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।।**
**तस्माच्छास्त्रं प्रमाणं हि कार्याकार्यव्यवस्थितौ।**
**ज्ञात्वा शास्त्रविधानोक्तं तत्त्वं कुर्याद्गुरोर्मुखात्**[2] ।। इति।



१. सि. शि., परि. २२ श्लोक ७०२ (८०२)।
२. पा. आ. स. प. श्लोक. २०४. २०६।

# पारमेश्वरागमे ज्ञानकर्मसमन्वयः

*डॉ. परड्डी मल्लिकार्जुनः*
*निवृत्तसंस्कृतप्राध्यापकः, क. वि. वि.*

**वन्दे हिमाद्रितनयाकरकण्ठमालं**
**गङ्गातरङ्गजलधौतजटाकलापम् ।**
**भोगापवर्गवरदं जगदेकपालं**
**सद्भक्तमानसमरालमनन्तलीलम् ।।**
**ज्ञानादेव तु कैवल्यमिदमद्वैतभाषितम् ।**
**कर्मजालं जगन्मूलमज्ञानाद् भवबन्धनम् ।।**

अद्वैतवेदान्तवादिनां मते ज्ञानमेव कैवल्यसाधनम् । यदुक्तम्–ज्ञानादेव तु कैवल्यमिति । अज्ञानेन क्रियमाणं सर्वमपि कर्म भवबन्धकारणमिति तेषामभिप्रायः । अन्ततोगत्वा श्वासक्रियाप्यज्ञानमिति ते मन्यन्ते । ब्रह्मैव सत्यमिति मन्वाना जगन्मिथ्येति ज्ञात्वा जगदस्तित्वस्वीकारेण ज्ञानमेव शरणमिति ब्रुवन्ति । **"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः"** इति महावाक्यमत्रानुसन्धेयम् ।

किन्त्वल्पज्ञस्य जीवात्मनो ब्रह्मीभवनार्थं सर्वज्ञत्वादिब्रह्मसद्‌गुणसम्पादनेऽनुष्ठानरूपं कर्मानिवार्यं भवतीति वक्तुं शक्यते ।

**सांख्यज्ञानैकनिष्ठत्वाद् योगानुष्ठानवर्जितम् ।**
**मुक्तिकान्तारतेर्भूयात् कथं परमकारणम् ।।**

सच्चिदानन्दस्वरूपोऽयं पुरुषोऽज्ञानवशाद् दुःखानुभूतिं कुरुते । स्वरूपज्ञानेऽपवर्ग-प्राप्तिरिति सांख्यमतानुयायिनां मतम् । तादृशस्वरूपापादनं योगानुष्ठानेन विना न सुलभमिति सेश्वरसांख्यस्य योगस्याविर्भावोऽभवत् । आसनादियोगाङ्गानुष्ठाने आत्मस्वरूपज्ञानात् कैवल्यप्राप्तिरिति पातञ्जलयोगशास्त्रमतम् । उक्तं च महर्षिणा पतञ्जलिना—

१. 'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः'' । (योगसूत्रम्, २/२८)

२. आसनसिद्धौ (स्थैर्ये) द्वन्द्वानभिघातः । (तत्रैव, २/४८)

३. प्राणायामप्रतिष्ठायां प्रकाशावरणक्षयः । (तत्रैव, २/५२)

४. धारणादिषु च योग्यता मनसः। (योगसूत्रम्, २/५३)

५. प्रत्याहारादिन्द्रियाणां वश्यता। (तत्रैव, २/५५)

इत्यादिक्रमेण क्रियाद्वारैव मोक्षप्राप्तिरिति योगविदामभिमतम्।

**शिवोऽहमिति यज्ज्ञानं साधनामार्गवर्जितम्।**
**शिवैकया भावनाशून्यं भवेदेव न संशयः।।**

तत्त्वमस्यादिमहावाक्यैर्गुरूपदिष्टैरहं ब्रह्मास्मि, शिवोऽहमिति केवलं ब्रह्मचिन्तनं तारकं न भवतीति सम्यगुपदिष्टम्। दीक्षात्रयसहायेन गुरुणा मलत्रयनाशे कृतेऽपि शुद्धे जीवात्माङ्गनाम्ना प्रसिद्धः सन् पञ्चाचारषट्स्थलमार्गाचरणेन विना लिङ्गाङ्गसामरस्यरूपं मोक्षं प्राप्तुमसमर्थ इति शिवयोगविदामभिप्रायः। शिवगुणप्राप्त्यैव शिवस्वरूपप्राप्तिस्तथा च शिवयोगसम्प्राप्तिरिति क्रमो यदि मन्यते, तत् शिवज्ञानेनैव सह क्रियामार्गस्याप्यावश्यकता वर्तते। अत एवोक्तम्—

**फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्।**
**न नामग्रहणादेव तस्य वारि प्रसीदति।।** (मनुस्मृतिः, ६/६७)

अत एव ज्ञानमनुष्ठानशून्यं निरर्थकमित्याङ्ग्ललेखकेन यदुक्तं तदत्रानुसन्धेयम्–

''One may read all the books in the British museum, yet he may be illiterate''.

सुभाषितकारेणाप्युक्तम्—

**पुस्तकस्था तु या विद्या परहस्तगतं धनम्।**
**कार्यकाले समुत्पन्ने न सा विद्या न तद् धनम्।।**

अयमेवाशयः स्वात्मारामेण प्रकटितः—

**क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत्।**
**न शास्त्रपाठमात्रेण योगसिद्धिः प्रजायते।।**

(हठप्रदीपिका, १/६५)

**सर्वज्ञतामुख्यगुणोपपन्नं**
**शिवस्वरूपं शिवयोगलभ्यम्।**
**सम्प्राप्तुमिच्छन् शरणं प्रपन्नः**
**लिङ्गोपचारक्रियया समेतः।।**

किञ्चिज्ज्ञो जीवात्मा परमात्मनः सर्वज्ञत्वादिसद्गुणगणप्राप्त्यै सदा प्रयत्नशीलो भवतु। अन्यथा शिवसायुज्यलाभः कथं भवति। षट्स्थलात्मैव जीवात्मा क्रमशोऽध्यात्मक्षेत्रे

प्रगतिमासाद्य मुक्तिकान्तालिङ्गनसन्तुष्टो भवितुमर्हति। दिनचर्यारूपोऽयं षट्स्थलसिद्धान्तः साधकविकासहेतुर्भवति। उक्तं च सुभाषितकारेण–

**प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः।**
**किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति॥** इति।

सत्क्रियारहितं ज्ञानं दम्भाचाराभिधानवत् **"अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति"** इति सुभाषितानुसारेण क्रियाविहीनो विवेकी ज्ञानवान्नरः सिद्धिभाजनं कथं भवेत्? उक्तं च स्वात्मारामेण—

**न वेषधारणं सिद्धेः कारणं न च तत्कथा।**
**क्रियैव कारणं सिद्धेः सत्यमेतन्न संशयः॥**

(हठप्रदीपिका, १/६६)

**सदसद्विवेकसम्पन्नः सदाचारप्रभावतः।**
**लोकबन्धो भवेन्नित्यं जीवन्मुक्तो न संशयः॥**

आगमोक्तिरेकात्रानुसन्धेया—

**ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।**
**तस्मादाचारवान् योगी भवेदादेहपातनम्॥**

(चन्द्रज्ञानागमः, क्रियापादः, ९/१२)

शिवयोगिशिवाचार्येणाप्ययमेवाशयो निरूपितः—

**ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न सन्त्यजेत्।**
**आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः॥**

(सिद्धान्तशिखामणिः, ४/६५)

करणखण्डनं देहदण्डनं विना स्वर्गप्राप्तिरसम्भवेति कर्नाटकभाषाकविवरेण्येन सर्वज्ञेन यदुक्तं तदप्यत्र स्मरणीयम्। कृतकृत्योऽपि ज्ञानी सामान्यजनोपकारायाचारं न त्यजेदिति गीतायामप्युक्तम्—

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥** (गीता, ३/२१)

**इष्टलिङ्गादिपूजार्थं यद्धनं भक्तवाञ्छितम्।**
**धर्ममार्गेण सम्पाद्य सत्क्रिया तत्र कारणम्॥**

शिवलिङ्गादिपूजार्थं शिवनामादिकीर्तनार्थं च क्रियापि साधनम्, न केवलं ज्ञानमिति वक्तुं शक्यते। उक्तं चात्र–

**त्रिकालमर्चयेल्लिङ्गं शिवपञ्चाक्षरं जपन् ।**
**कीर्तयन् शिवनामानि शिवोऽहमिति भावयन् ।।**

(पारमेश्वरागमः, ८/९०)

लिङ्गपूजोपचारार्थं धर्मार्जितवित्तावश्यकता भवतीतिसुव्यक्तम् । सदाचारनिरूपणावसरे एतदेव सूचितम्—

**धर्मार्जितेन वित्तेन यत्सन्तर्पणमन्वहम् ।**
**गुरुजङ्गमलिङ्गानां सदाचारः स उच्यते ।।**

(चन्द्रज्ञानागमः, १/६)

**पक्षद्वयसहायेन खेचराणां गतिर्यथा ।**
**ज्ञानक्रियाबलोपेतो मोक्षलाभयुतस्तथा ।।**

पक्षैकहीनो खेचरो यथा खेचरतां विहाय भूशायी भवति, तथा ज्ञानक्रिययोरेकतो हीनो नरः सिद्धिं न लभते । उक्तं चात्र—

**उभाभ्यामपि पक्षाभ्यां यथा खे पक्षिणां गतिः ।**
**तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ।।**

(लघुहारीतः, ७/१०/२)

यद्यपि शिवागमोक्तिर्ज्ञानमाहात्म्यं निरूपयति, तथापि क्रियाविहीनश्चेत्, मुक्तिमार्गबहिष्कृतः—

**नास्ति ज्ञानात्परं मित्रं न भक्तेः साधनं परम् ।**

(पारमेश्वरागमः, १०/९०)

**लिङ्गदीक्षात्रयोपात्तलिङ्गयोगोऽपि साधकः ।**
**अनुष्ठानविहीनश्चेत् कथं मुक्तिमवाप्नुयात् ।।**

अनाथादिभरणमपि क्रियांशमेतमेव–

**साक्षान्मद्रूपमीशानि शयनासनभोजनम् ।**
**अनाथं रोगिणं दीनं मूकं बधिरमेव च ।**
**पङ्गुं मूढं दुराचारं नावमन्येत लिङ्गिनम् ।।**

(पारमेश्वरागमः,५/८८.९०)

भ्रमरकीटन्यायानुसारं भ्रमराक्रमणभीत्या भ्रमरध्यानपरः कीटो यथा भ्रमरतां याति, तथा मानवः शिवयोगेन शिवो भवति, नान्यथा ।

**कीटो भ्रमरतां याति भ्रमराक्रमणभीतितः ।**
**तद्ध्यानं तु क्रियैव स्यात् कैवल्यं कथमन्यथा ।।**

उक्तं चात्र—

**गुरुदीक्षापरिप्राप्तशिवलिङ्गाङ्गयोगतः ।**
**द्विरेफकीटन्यायेन शिवैक्यं प्राप्तवान् द्विजः ।।**

(मुकुटागमः, ७/३)

सत्यशुद्धक्रियाशक्तिर्भक्तानां मुक्तिदायिनीति विषयो नास्ति मतभेदः। इयमेव शक्ति'कायक'नाम्ना शिवशरणैरुदाहृता।

**तदेतत्कायकं नाम्ना शिवशरणविश्रुतम् ।**
**यत्तु याचकनिर्मुक्तसमाजनिर्मितिक्षमम् ।।**
**येन कोऽपि न स्याद्दीनो नापि धूर्तो न वञ्चकः ।**
**सर्वोदयैकनिष्ठेऽस्मिन् समाजे सत्त्वशालिनि ।।**
**शैवागमादिसद्ग्रन्थनिरूपणविचारणात् ।**
**ज्ञानकर्मद्वयोपेता हि भक्तिर्मुक्तिसाधनम् ।।**

ज्ञानादित्रिवर्गप्राप्तिरेव मुक्तिहेतुरित्यत्र विषये प्रमाणम्।

**कर्मभक्तिचिदात्मानस्त्वधिकारास्त्रयः स्फुटाः ।।**

(पारमेश्वरागमः, २२/६४)

ज्ञानक्रियासमन्वयादेव वीरशैवमतं विश्वमान्यं भवितुमर्हति। इदं वीरशैववैशिष्ट्यम्—

**वर्णपाशविमोचनं धनिकप्रभावनिवारणं**
**साक्षराधमराक्षसादिनिवारणं मितभाषणम् ।**
**धर्मजीविपरोपजीवननाशनं भयनाशनं**
**विश्वमङ्गलकामनं भुवि वीरशैवरसायनम् ।।**

अत एव पारमेश्वरागमोक्तिरियं नातिशयोक्तिः—

**न वीरशैवसदृशं मतमस्ति जगत्त्रये ।**
**सर्वभोगप्रदं पुण्यं शिवसायुज्यदायकम् ।।** इति।

(पारमेश्वरागमः, १२/१२)

•

# पारमेश्वरागम में निरूपित षट्स्थल का स्वरूप

*षण्मुखय्य अक्कूरमठ*

## प्रस्तावना

षट्स्थल सिद्धान्त वीरशैव धर्म का अनुपम योगदान है। भारतीय तत्त्वशास्त्र में यह विशेष एवं उल्लेखनीय बात है। इसमें साधक का आध्यात्मिक साधन का सार है। इसमें तात्त्विक सिद्धान्त एवं आचरण दोनों समाहित हैं। षट्स्थल का उद्गम आगम में पाया जाता है। वीरशैव धर्म में अष्टावरण अङ्ग है, पञ्चाचार प्राण हैं तथा षट्स्थल को आत्मा का स्थान दिया गया है। षट्स्थल एक सिद्धान्त होने के साथ एक दर्शन भी है। यह अध्यात्म-साधक का साधन-पथ है। यह शिवयोग का पथ भी है। लिङ्गाङ्ग-सामरस्य अथवा जीवात्मा-परमात्मा दोनों का सामरस्य साधन है। सरल रूप में कहना हो, तो षट्स्थल में छ: सोपान (Six Stages) हैं। ये साधक के सोपान माने जाते हैं। वह कदम-कदम पर आगे बढ़ते मुक्ति पाता है।

## स्थल शब्द का विवेचन

स्थल शब्द का शाब्दिक अर्थ होता है 'स्थान'। किन्तु वीरशैव धर्म की पारिभाषिक शब्दावली के अनुसार इसका अर्थ है 'परशिव'। परशिव उस महास्थल का आधार है, जिसमें सृष्टि का विकास होता है। इसके अलावा सृष्टि की स्थिति तथा लय होकर सृष्टि पुन: उसी में समा जाती है। अनुभवसूत्र के अनुसार–

**सर्वेषां स्थानभूतत्वाल्लयभूतत्वतस्ततः।**
**तत्त्वानां महदादीनां स्थलमित्यभिधीयते।।**
**स्थकारः स्थानवाची स्याल्लकारो लयवाचकः।**
**तयोः कारणभूतं यत्तदेव स्थलमुच्यते।।**

सभी तत्त्वों की स्थिति और लय स्थान होने के कारण परब्रह्म, परशिव, परतत्त्व को 'स्थल' कहते हैं। ऊपर उल्लिखित पंक्तियों में स्थल का अर्थ सुस्पष्ट है। स्थल की विशेषता यह भी है कि सभी आत्माएँ मुक्ति प्राप्त कर, उसी में समाहित हो जाती हैं।

यह चरम आधार (Ultimate Substratum) है। चरम आधार होने के कारण परतत्त्व ही 'स्थल' है।

## अङ्ग और लिङ्ग की परिकल्पना

यह कहना कठिन है कि विश्व की रचना कोई किसी हेतु से, कोई किसी लक्ष्य की प्राप्ति के लिए हुई हो। यदि कोई ऐसा सोचता है, तो यह कल्पना मात्र है। परमेश्वर पूर्ण आनन्दमय है। यह सृष्टि उनके लिए एक खेल, कौतुक या लीलामात्र है। ब्रह्मसूत्रों में कहा गया है कि **"लोकवत्तु लीलाकैवल्यम्"**। शक्तिविशिष्टाद्वैत का भी यही मत है। शिव ने अपने विनोद के लिए सृष्टि की रचना की। आत्मा का सुख-दुःख दोनों का अनुभव करना भी स्वयं शिव के विनोद का ही कारण है। परशिव की लीला की इच्छा से तथा उनकी अपनी ताकत के क्षोभमात्र से ये दो भागों में बँट जाते हैं (शिवाद्वैतदर्पणानुसार)।

**स्वशक्तिक्षोभमात्रेण स्थलं तद् द्विविधं भवेत्।**
**एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम्।।**

अपनी शक्ति के क्षोभमात्र से वह स्थल द्विविध हो जाता है। एक का नाम होता है लिङ्गस्थल तथा दूसरे का नाम अङ्गस्थल। वीरशैव धर्म लिङ्ग से आरम्भ होकर लिङ्गाङ्ग सामरस्य का आदर्श इसकी अन्तिम सीमा होती है। वीरशैव केवल शरीर पर लिङ्गधारण करने मात्र से नहीं, बल्कि प्रमुखतः लिङ्गमय धर्म को धारण करने के कारण होता है। अनुभवसूत्र के अनुसार लिङ्ग का शाब्दिक अर्थ यह है–

**लीयते गम्यते यत्र तत् सर्वं चराचरम्।**
**तदेतत् लिङ्गमित्युक्तं लिङ्गतत्त्वपरायणैः।।**

मतलब, जहाँ सम्पूर्ण चराचर जगत् का लय हो जाता है,वही लिङ्ग कहलाता है। सभी प्राणियों के लिए, यानी गति का हेतु होने के कारण साकार-निराकार शिव को लिङ्ग कहा जाता है। इसमें साकार-निराकार शब्द का इसलिए उल्लेख किया गया है कि यद्यपि ईश्वर निराकार तो है, परन्तु इष्टलिङ्ग के रूप में वह साकार है। इष्टलिङ्ग का कोई विशेष आकार नहीं होने के कारण वह निराकार भी है। जीव जगत् में हर एक प्रत्येक जीवी से यही आशा की जाती है कि वह सांसारिक बन्धनों से छूटने की ओर प्रवृत्त होगा। अङ्ग और जीव शब्दों को एक ही अर्थ में प्रवृत्त किया जाता है। लेकिन वास्तव में जीव जब लिङ्ग का उपासक बन जाता है, तब ही वह अङ्ग बन जाता है। शिव असीम व पवित्र शक्ति से युक्त है। जीव शिव स्वयं है, पर उसकी शक्ति सीमित

है। इस प्रकार शिव और जीव दोनों एक ही हैं। पर परब्रह्म की लीला एक विशेष समय के लिए एक-दूसरे से पृथक् कर देती है। वीरशैव धर्म अङ्ग (जीव) के लिङ्ग के जरिये शिव के समीप लां देता है। जीव शक्ति से युक्त स्वयं शिव है। उसे सीमाओं से मुक्त होकर पुन: शिव बनना है। ऐसा हो जाने के उपरान्त 'स्थल' अङ्ग एवं लिङ्ग दो भागों में बँट जाने के कारण अनायास ही शक्ति भी दो भागों में बँट जाती है। वे हैं कला और भक्ति। अनुभवसूत्र के अनुसार–

**यथा स्थलं द्विधा भूतं तथा शक्तिर्द्विधा भवेत्।**
**शक्तिरप्रतिमा साक्षाच्छिवेन सहधर्मिणी।।**

## शक्ति और भक्ति का स्वरूप

जिस तरह एक बड़ी ज्वाला छोटी सी दीपिका की आकृति में विभक्त हो जाती है, उसी तरह माहेश्वरी शक्ति भक्ति के रूप में विभक्त हो जाती है। शक्ति वासनायुक्त है और भक्ति निर्वासनायुक्त है। पारमार्थ निरूपण में शक्ति और भक्ति में कोई भेद नहीं है। शक्ति प्रवृत्ति है, तो भक्ति निवृत्ति है। सृष्टि की वृद्धि शक्ति का स्वाभाविक गुणविशेष है। आत्मा के प्रपञ्च की वासना मायारहित है। फिर भी तर्क प्रमाण से देखा जाय, तो शक्ति की गुणविशेष भक्ति गुणों से अधिक है। शक्ति उपास्यत्व है, तो भक्ति उपासकत्व है। इसीलिए शक्ति लिङ्गस्थल में और भक्ति अङ्गस्थल में स्थित है। साक्षात् शिव लिङ्गस्थल और जीव अङ्गस्थल बनता है। लिङ्गाङ्ग का ऐक्य शिवजीवैक्य ही है।

## लिङ्गाङ्गस्वरूप और सामरस्य

लिङ्गस्थल में तीन भेद माने गये हैं– इष्टलिङ्ग, प्राणलिङ्ग और भावलिङ्ग। स्थूल, सूक्ष्म तथा कारण तीनों को शरीरों में धारण करना पड़ता है। अङ्गस्थल में तीन प्रकार हैं– योगाङ्ग, भोगाङ्ग तथा त्यागाङ्ग। वैसे भक्ति में भी छ: भेद हैं– समरस, आनन्द, अनुभव, अवधान, निष्ठा और सद्भक्ति, ये षट्स्थल उपासना के छ: सोपान हैं। अङ्ग इनमें से एक के बाद दूसरे को प्राप्त करता हुआ अपना अन्तिम लक्ष्य लिङ्गाङ्ग-सामरस्य को प्राप्त करता है। अङ्ग क्रमश: स्थूल से सूक्ष्म और सूक्ष्म से कारण की ओर अग्रसर हो जाता है। प्राणलिङ्ग और भावलिङ्ग की उपासना मानसिक और आत्मिक उपासना है। अङ्ग शिवकृपा से उन क्रमिक सोपानों पर चढ़ता हुआ अन्त में शिवसामरस्य को प्राप्त करता है। जैसे मुण्डकोपनिषत् में कहा गया है–

**यथा नद्य: स्यन्दमाना: समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।**
**तथा विद्वान्नामरूपाद्विमुक्त: परात्परं पुरुषमुपैति दिव्यम्।।**

जिस प्रकार समुद्र में जाकर नदियाँ अपने नाम-रूप को छोड़ उसके साथ एक हो जाती हैं, उसी प्रकार मुक्त आत्माएँ अपने नाम-रूप को छोडकर परशिव के साथ समरस हो जाती हैं।

**जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम्।**
**परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते।।**

पानी में पानी के साथ मिल जुल जाने की तरह या आग के साथ आग के मिल जाने की भाँति आत्मा परमात्मा में विलीन हो जाता है। छः सोपानों द्वारा आत्मा अपने अन्तिम लक्ष्य को प्राप्त कर परमात्म-स्वरूप बन जाता है। अङ्ग यद्यपि शिव का एक अङ्ग और उसी का स्वरूप है, पर अज्ञान के कारण पृथक् हो जाता है। अन्त में लिङ्गैक्य में अपने वास्तविक स्वरूप को पहचान कर पूर्ण सामरस्य में मग्न हो जाता है। इसी अवस्था को शिवसामरस्य, शिवजीवैक्य, लिङ्गाङ्गसामरस्य, लिङ्गैक्य आदि शब्दों से व्यक्त किया जाता है। इस सम्पूर्ण विषय को इस तालिका की सहायता से समझा जा सकता है–



## पारमेश्वरागम में निरूपित षट्स्थल का स्वरूप

शिवागमों में पारमेश्वरागम का विशिष्ट स्थान है। इसमें वीरशैव सिद्धान्त और तत्त्वों का विस्तारपूर्वक विवरण मिलता है। इस आगम के छठें पटल में षट्स्थलों का स्वरूप प्रदर्शित है। स्वयं परमात्मा षट्स्थलों का स्वरूप धारण कर लेता है। इसको देखा जाय, तो यहाँ क्रमशः भक्त, माहेश्वर, प्रसादी, प्राणलिङ्गी, शरण तथा ऐक्य नामक छः स्थलों के स्वरूप को विस्तार से बताकर इनके ज्ञान की महिमा निरूपित की गई है। आगे चलकर महेश्वर के सर्वज्ञता आदि छः अङ्गों की षड्विध स्थलों में योजना के प्रकार को भी सूचित कर भक्ति, कर्मक्षय, बुद्धि, विचार, दर्पक्षय और सम्यक् ज्ञान नामक षड्विध उपाङ्गों के लक्षण बताये गये हैं। इतना ही नहीं, समस्त अङ्गों और उपाङ्गों के परस्पर सम्बन्धों को प्रसङ्गवश षड्विध ऊर्मियों और अरिषड्वर्ग का भी विस्तृत विवरण दिया गया है। इन सभी विषयों का जिस किसी को सम्यक् ज्ञान है, उसको मुक्ति हाथ में ही आ जाती है। अङ्गों और उपाङ्गों को इस आगम में शिवस्वरूप माना गया है। अब हम इन सभी का विवरण देखेंगे–

**भक्तो माहेश्वरश्चैव प्रसादी प्राणलिङ्गकः।**
**शरणः शिवलिङ्गैक्यः स्थलषट्कं मम प्रियम्।।**

(पा. आ. ६.८)

इस आगम में चेतावनी के रूप में स्पष्ट रूप से कहा गया है कि जो व्यक्ति शिवभक्ति से रहित, दुराचार में निरत और नास्तिक हैं, ऐसे व्यक्ति को षट्स्थल का उपदेश कदापि नही देना चाहिये। वीरशैव दीक्षा एक कल्पवृक्ष है। षट्स्थल तत्फल माना जाता है। इतना ही नहीं भक्त, महेश, प्रसादी, प्राणलिङ्गी, शरण और शिवैक्य जैसे छः स्थल प्रमुख रूप से मुक्ति के साधन माने जाते हैं। अब हम देखेंगे कि प्रत्येक स्थल की विशेषता क्या है ?

### १. भक्तस्थल

**गुरौ च जङ्गमे लिङ्गे तारतम्यविशेषतः।**
**पूज्येत् त्रिविधं रूपं तद्भक्तस्थलमुच्यते।।**

(पा. आ. ६.९)

उपर्युक्त उक्ति में कहा गया है कि गुरु, जङ्गम तथा इष्टलिङ्ग तीनों में परशिव का रूप तरतमभाव से विद्यमान है। इस त्रिविध रूप की जो भी पूजा करता है, वही भक्तस्थल नाम से प्रसिद्ध होता है। भक्तस्थल पृथ्वीतत्त्व का प्रतिनिधि भी है। इसका

मतलब है कि गुरु-लिङ्ग-जङ्गम की समान भाव से श्रद्धा-भक्ति के साथ आराधना, पूजा करता है, वही भक्तस्थल का स्वरूप है। यही वीरशैव धर्म में आराध्य माना गया है। इनमें श्रद्धा रखना ही भक्तस्थल का प्रमुख लक्षण है।

### २. माहेश्वरस्थल

**यो गुरूक्तेन मार्गेण लिङ्गपूजारतः सदा।**
**जङ्गमानर्चयेच्छक्त्या स हि माहेश्वरः स्मृतः।।**

(पा. आ. ६.१३)

जो साधक गुरु द्वारा उपदिष्ट मार्ग से सदा इष्टलिङ्ग की पूजा में लीन रहता है तथा अपनी शक्ति के अनुसार जङ्गमों की पूजा करता है, तीनों कालों में इष्टलिङ्ग की पूजा में निरत है, भक्तों के प्रति भक्तिभाव से आदर करता है, वीरशैव मत में उल्लिखित आदर्शों का पूरी तरह से पालन करता है, वही माहेश्वर कहलाता है। आचारों के पालन तथा जङ्गमों के पूजन में जो साधक निष्ठापूर्वक लगा हुआ है, उसे ही निस्सन्देह माहेश्वरस्थल कहते हैं। माहेश्वरस्थल जलतत्त्व का प्रतिनिधित्व करता है (पा.आ. १३.१६)।

### ३. प्रसादिस्थल

**योऽनर्पितं महेशानि नार्चयित्वापि जङ्गमान्।**
**नाश्नाति न त्यजेन्मह्यमर्पितं कृच्छ्रगोऽपि वा।।**

(पा. आ. ६.१७)

जो साधक भगवान् को समर्पित किये बिना, जङ्गमों की पूजा किये बिना, भारी सङ्कट आने पर भी भोजन नहीं करता तथा भोजन को भगवान् को समर्पित किये बिना भोजन नहीं करता, उसे प्रसादी कहते हैं। यह स्थल अग्नितत्त्व स्वरूप है।

### ४. प्राणलिङ्गस्थल

**यथा प्राणे तथा लिङ्गे यथा लिङ्गे तथा शिवे।**
**प्राणलिङ्गशिवेष्वेकबुद्धिमान् प्राणलिङ्गकः।।**

(पा. आ. ६.२०)

इस स्थल में साधक इष्टलिङ्ग, प्राणलिङ्ग तथा शिव में समान बुद्धि रखकर साधना करता है। उसी को प्राणलिङ्ग कहा जाता है। प्राणलिङ्गी वायुतत्त्व का स्वरूप है।

## ५. शरणस्थल

**एषणात्रयनिर्मुक्तो नित्यमेकान्तसेवनः ।**
**मम ध्यानरतो नित्यं शरणः परिकीर्तितः ।।**

(पा. आ. ६.२३)

शरणस्थल में पुत्रकामना, धनकामना तथा प्रतिष्ठा कामनाओं में जो साधक मुक्त है, हमेशा एकान्त में रहते हुये भगवान् में मन लगाकर ध्यानासक्त रहता है, वह शरण कहलाता है। यह शरण आकाशतत्त्व का स्वरूप है।

## ६. शिवलिङ्गैक्यस्थल

**न पूजा नैव च ध्यानं न योगकरणादिकम् ।**
**अहन्ताभावनाधीरः शिवलिङ्गैक्यसंज्ञकः ।।**

(पा. आ. ६.२६)

भगवान् के सिवाय और कुछ भी नहीं है, इस दुनिया में इस दृढ भावना, सङ्कल्प से जो इनसान लीन होता है, वह शिवैक्य कहलाता है। परशिव या शिवलिङ्ग के साथ समस्त स्थिति को प्राप्त साधक ही ऐक्यस्थल कहलाता है। शिवैक्य साक्षी तत्त्व का स्वरूप है। मतलब स्पष्ट है कि शिवैक्य प्राप्त शिवयोगी साक्षात् शिवस्वरूप है। इस प्रकार जो साधक षट्स्थल को मानकर साधना करता है, वह व्यक्ति जन्म तथा संसार के सभी बन्धनों से मुक्त हो जाता है।

षट्स्थल के अतिरिक्त पारमेश्वरागम में माहेश्वर के छः अङ्ग बतलाये गये हैं। जैसे- सर्वज्ञता, तृप्ति, अनादिबोध, स्वतन्त्रता, सदा अलुप्त शक्ति तथा अनन्त शक्ति। एक पल के लिए इन सभी अङ्गों की विशेषता को यहाँ पर देखेंगे—

१. भक्तिस्थल का साधक शिव का सर्वज्ञता नामक अङ्ग है।
२. माहेश्वर का साधक शिव का तृप्ति नामक अङ्ग कहलाता है।
३. प्रसादी नाम का साधक शिव का अनादि या निरङ्कुश नामक बोध है।
४. प्राणलिङ्गी स्थल के साधक को स्वतन्त्र नामक अङ्ग कहते हैं।
५. शरणस्थल साधक को अलुप्त शक्ति नामक अङ्ग कहते हैं।
६. ऐक्य के साधक को अनन्त नामक शक्ति कहते हैं।

उपर्युक्त छः स्थलों को अङ्गस्थल कहते हैं। ये सब पाँच ज्ञानेन्द्रिय और मन के प्रतिनिधि कहलाते हैं। जो साधक इन सभी छः अङ्गस्थलों का ज्ञान सद्गुरु के उपदेश द्वारा प्राप्त करता है, वह साक्षात् परशिवस्वरूप हो जाता है। जिस किसी को इस

अङ्गाङ्गी भाव का बोध नहीं है, उस व्यक्ति को मुक्ति कदापि नहीं मिलेगी। (पा.आ. ६.३१-३९)

पारमेश्वरागम में छः अङ्गों के अतिरिक्त भक्ति आदि के रूप में परमपद (मोक्ष या मुक्ति) देने वाले छः उपाङ्ग (Sub-Division) भी वर्णित हैं। जैसे– भक्ति, कर्मक्षय, बुद्धि, विचार, दर्पनाश एवं सम्यग् ज्ञान। अब हम एक पल के लिए इनके बारे में देखेंगे (पा.आ. ६.४२)।

## १. भक्ति

जब ईश्वर के प्रति परिशुद्ध भावना प्रकट हो जाती है, वही सद्‌भक्ति है। शिवभक्त के लिए भक्ति ही माता तथा पिता हैं। उसके लिए भक्ति कामधेनु और कल्पवृक्ष है। भक्ति भावना से रहित व्यक्ति के सारे प्रयत्न इसी तरह निष्फल हो जाते हैं, जिस तरह मङ्गलसूत्र मात्र नहीं धारण करने से विधवा। ऐसे व्यक्ति की भक्ति भी फलवती नहीं हो सकती। (पा.आ. ६.४६-४७)

## २. कर्मक्षय

पूर्व जन्मों के कर्मों को तथा वर्तमान जन्म में किये जानेवाले कर्मों को भी भक्ति की शक्ति नष्ट कर देती है। (६.४८)

## ३. बुद्धि

कर्मक्षय हो जाने पर मनुष्य की बुद्धि निर्मल हो जाती है, विषयों की ओर उन्मुख न होते हुये परमात्मा में स्थिर हो जाती है। जिस तरह भ्रमर का गुञ्जन सुनकर साधारण कीट स्वयं भ्रमर बन जाता है, उसी तरह शिव का ध्यान करने वाले जीव स्वयं शिव बन जाते हैं। इसको भ्रमर-कीट न्याय भी कहते हैं। साधक की जब निर्मल बुद्धि नहीं रहती, विषय सुख में मग्न होकर क्रोध एवं मोह के कारण उसकी स्मृति भ्रष्ट हो जाती है। स्मृति नष्ट होने की स्थिति में उसकी मति मारी जाती है। इतना ही नहीं वह स्वयं भी नष्ट हो जाता है। (६.४९-५३)

## ४. विचार

जो साधक शुद्ध बुद्धि से गुरु के उपदेशानुसार चलते हुये अहितों का निश्चित ज्ञान प्राप्त करता है, उसी को विचार कहा जाता है। उसके अन्य विषयों पर विचार करने से कोई भी प्रयोजन नहीं रहता। (६.५४-५५)

## ५. दर्पनाश

जब साधक गुरु के उपदेश द्वारा शास्त्रों का मनन कर, समस्त भूतों का हित कर

अपने स्वरूप को जान लेता है, तो अनायास ही उसके दर्प का नाश हो जाता है। (६.५६)

## ६. सम्यग् ज्ञान

जब साधक का अहङ्कार नष्ट हो जाता है, वह शिवज्ञान में लीन हो जाता है, समस्त प्राणियों को शिव के रूप में देखता है। अपने आप में प्राणियों में एकता का दर्शन करने वाला ही सम्यग् ज्ञानी कहलाता है। (६.५७-५८)

पारमेश्वरागम में छः स्थलों के अलावा छः प्रकार के अङ्ग तथा छः प्रकार के उपाङ्ग भी हैं। ये परस्पर जुड़े हुये हैं और इनमें आपस में सम्बन्ध भी है। जैसे सर्वज्ञता ही भक्ति है। तृप्ति ही कर्मक्षय है। अनादि बोध ही बुद्धि है। स्वतन्त्रता ही विचार है। अलुप्त शक्ति ही गर्वक्षय है तथा अनन्त शक्ति ही सम्यग् ज्ञान है। अङ्ग और उपाङ्ग के रूप में साधक (शिवयोगी) षट्स्थल सिद्धान्त को जानता है। वह स्वयं शिवस्वरूप है। भक्ति आदि छः, सर्वज्ञता आदि छः, भक्ति आदि छः ये सभी दो हाथ, दो पैर, शिर और शरीर हैं। इस तरह से भगवान् शिव के अथवा भक्त के अङ्गों के रूप में जाने जाते हैं। ये षट्स्थल के विराट् स्वरूप माने जाते हैं। सद्गुरु के द्वारा इस ज्ञान को प्राप्त करना आवश्यक है। तब साधक छः प्रकार की ऊर्मियों से तथा अरि षड्वर्गों से मुक्त हो जाता है। इतना ही नहीं, अपनी सद्बुद्धि से अहङ्कार को त्याग कर साक्षात् शिव बनने के साथ ही साथ वह मुक्त भी हो जाता है।

## षडूर्मियाँ

भूख, प्यास, शोक, मोह, जन्म तथा मरण– ये छः संसाररूपी समुद्र की ऊर्मियाँ हैं। जिस तरह से समुद्र में लहरें निरन्तर उठती ही रहती हैं, उसी तरह संसारी जीवी को ये छः ऊर्मियाँ सदा ही सताती रहती हैं। क्षुधा तथा पिपासा के प्राण तथा शोक, मोह तथा मत्सर मन के तथा जन्म और मरण देह के धर्म हैं। (पा.आ. ६.६७)

इनके स्वभाव बिलकुल समुद्र की लहरों के जैसा है। यही कारण है कि इनको भी ऊर्मि नाम दिया गया है। ये मनुष्य को सदा दुःख देती रहती हैं। इस कार्य में अरिषड्वर्ग इनको परोक्ष रूप से सहायता करता रहता है। (पा.आ. ६.६८-७०)

काम, क्रोध, लोभ, मोह, मद तथा मात्सर्य ये सभी अरिषड्वर्ग कहलाते हैं। ये मनुष्य के शत्रु हैं। सहज ही मनुष्य को हानि पहुँचाते हैं। इसीलिए इनको अरि (वैरी) षड्वर्ग कहा गया है। जो साधक छः ऊर्मियों के साथ अरिषड्वर्गों पर विजय प्राप्त कर लेता है, तो मुक्त हो जाता है। भक्त आदि छः अङ्गों से लेकर (षट्स्थल) सम्यग्, ज्ञान

पर्यन्त उपाङ्गों में उत्तरोत्तर श्रेष्ठता मानी जाती है। पूर्व का स्थल साधन और उत्तरोत्तर स्थल साध्य माना गया है।

षडूर्मियों एवं अरिषड्वर्ग से विहीन सम्यग् ज्ञान के अधिकारी और छ: स्थलों को भली-भाँति जानने वाले मनुष्य के हाथों में मुक्ति स्वयं आ जाती है। (६.७१-७४)

उपसंहार के रूप में कहा जाता है कि जैसे उपसंहार यहाँ पूर्व में ही उल्लिखित किया गया है कि 'षट्स्थल' वीरशैव धर्म का प्राणस्वरूप है। विभिन्न आगमों में इनके अनेक प्रकार के विवरण पाये जाते हैं। फिर भी इसकी विशेषता अनुपम है और अनमोल है। जैसे सूक्ष्मागम में षट्स्थल का विवरण इस प्रकार दिया गया है–

१. जो साधक देह, इन्द्रिय और आत्मा का अभिमान छोड़ देता है, वह निस्सन्देह 'भक्त' कहलाता है।

२. जो साधक अपने चित्त को मन्त्र, जप, तप द्वारा राग, द्वेष आदि दुर्गुणों से मुक्त कर लेता है, उसे माहेश्वर कहते हैं।

३. जिस साधक का 'चित्त' निर्मल है, वह प्रसादी कहलाता है।

४. जो साधक जीव-भाव का भ्रम छोड़कर लिङ्गस्वरूप हो जाता है, वह प्राणलिङ्गी कहलाता है।

५. जो इनसान शिवभाव में विश्वास कर निश्चिन्त होकर आनन्द में लीन रहता है, वह 'शरण' कहलाता है।

६. शिव और जीव विषयक सभी भ्रान्तियों से निर्मुक्त व्यक्ति 'ऐक्य' कहलाता है। (८: ३१-३५)

षट्स्थल लिङ्गाङ्ग सामरस्य का साधना पथ है। साधक यानी 'अङ्ग' जब लिङ्गदेव की ओर जाता है, तो यात्रिक कहलाता है। षडूर्मियों और अरिषड्वर्गों के दुरित गुणों को दूर कर क्रमश: एक-एक साधन को प्राप्त करते हुये, साधना पथ पर चलते हुये, अन्त में भगवान् में लीन हो जाता है। यह मनशास्त्र और मनोविज्ञान भी है तथा व्यक्ति के विकास की सम्पूर्णता भी है। यह 'योगविज्ञान' भी कहलाता है।

इस षट्स्थल का दूसरा अर्थ शिवयोग की परिपूर्ण साधना कहा जाय, तो अत्युक्ति नहीं होगी। इस सम्पूर्ण प्रक्रिया को तालिका के माध्यम से सरलता से समझा जा सकता है–

## षट्स्थल के अङ्गों और उपाङ्गों का वर्गीकरण

| | | | | | | |
|---|---|---|---|---|---|---|
| १. स्थल | भक्त- | – महेश | – प्रसादी | – प्राणलिङ्गी – | शरण | – ऐक्य |
| | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ |
| २. अङ्ग | सर्वज्ञता – | तृप्ति | – अनादिबोध – | स्वतन्त्रता – | अलुप्तशक्ति – | अनन्तशक्ति |
| | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ |
| ३. उपाङ्ग | भक्ति | – कर्मक्षय – | बुद्धि | – विचार | – दर्पनाश | – सम्यग् ज्ञान |
| | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ |
| ४. षडूर्मियाँ | भूख | – प्यास | – शोक | – मोह | – जन्म | – मरण |
| | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ |
| ५. अरिषड्वर्ग | काम | – क्रोध | – लोभ | – मोह | – मद | – मत्सर |



# पारमेश्वरागम में निरूपित षट्स्थल का स्वरूप

*सिद्धराम देव हिरेमठ (हिप्परगि)*

इस प्रपञ्च में जीवित रहकर अपना व्यवहार करने के लिए प्रत्येक व्यक्ति को पाँच भूतों से निर्मित स्थूल शरीर, पाँच प्राण तथा इन सबके प्रेरक आत्मा का होना नितान्त आवश्यक है। इनके रहने पर ही प्रत्येक व्यक्ति लौकिक जीवन व्यतीत कर सकता है और लेन-देन, गमनागमन, खान-पान आदि लौकिक व्यवहार कर सकता है। जैसे लौकिक जीवन के लिए शरीर, प्राण तथा आत्मा की आवश्यकता है, वैसे ही वीरशैव सिद्धान्त के अनुसार आध्यात्मिक प्रगति के लिए अष्टावरण, पञ्चाचार तथा षट्स्थल के अनुष्ठान की आवश्यकता है। इसीलिए वीरशैव दर्शन के आचार्यों ने अष्टावरण को अङ्ग, पञ्चाचार को प्राण एवं षट्स्थल को आत्मा कहा है। वीरशैव धर्म में ये तीनों अत्यन्त प्रमुख तत्त्व हैं। वीरशैव धर्म के साहित्य में सर्वत्र इनकी चर्चा उपलब्ध है।

इसमें कोई सन्देह नहीं है कि वीरशैव धर्म का मूल साहित्य शिवागम हैं। ये कामिक से वातुल पर्यन्त अट्ठाईस माने गये हैं। इन शिवागमों के उत्तरभागों में वीरशैव धर्म के विचारों एवं तत्त्वों का उपदेश मिलता है। अत एव सिद्धान्तशिखामणि में कहा गया है–

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।**
**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्।।**

(सि. शि. ५.१४)

भगवान् शिव की वैखरी वाणी से उत्पन्न इन आगमों में पारमेश्वरागम भी एक है। परमेश्वर-प्राप्ति के विभिन्न उपायों का उपदेश इस ग्रन्थ में प्रतिपादित होने के कारण एवं परंमेश्वर शिव के द्वारा उपदिष्ट होने के कारण इस आगम को पारमेश्वरागम कहा गया है। इस आगम के छठें पटल में षट्स्थल के स्वरूपों का विवेचन मिलता है।

वीरशैव धर्म में षट्स्थल का विशेष स्थान है। इसीलिए इसको आत्मा का दर्जा दिया गया है।

## षट्स्थल ज्ञान की गोपनीयता

पारमेश्वरागम में षट्स्थल के स्वरूप का प्रतिपादन करने के पूर्व इसकी गोपनीयता पर एवं अनधिकारी को उसका उपदेश न देने पर जोर देते हुए कहा गया है—

**गोपनीयं प्रयत्नेन दरिद्राणां यथा निधिः ।**
**यथा स्त्रियां तथा गोप्या स्वयोनिरिव सुव्रते ।।**
**शिवभक्तिविहीनाय दुराचाररताय च ।**
**नास्तिकाय न दुष्टाय वक्तव्यः षट्स्थलक्रमः ।।** (६.३-४)

इस प्रपञ्च में यदि कोई वस्तु किसी प्रकार के प्रयत्न के बिना ही प्राप्त होती है, तो उसके प्रति लोगों के मन में श्रद्धा कम हो जाती है और उसके मूल्य की जानकारी नहीं होती। इसलिए यह षट्स्थल ज्ञान भी बिना प्रयत्न के ही सर्वसामान्य के रूप में प्राप्त हो जाता है, तो साधकों के मन में उसके प्रति गौरव भाव की कमी हो सकती है और असाधारण षट्स्थल ज्ञान सर्वसाधरण हो जाता, तो उसका मूल्य भी नहीं रहेगा। इसलिए साधकों के मन में षट्स्थल ज्ञान के प्रति श्रद्धा को बढ़ाने के लिए एवं उसकी महत्ता से अवगत कराने के उद्देश्य से पारमेश्वरागम में षट्स्थल ज्ञान की गोपनीयता की बात कही गयी है। इसी प्रकार असाधारण तत्त्वज्ञान का अयोग्य व्यक्ति को उपदेश देने से वह ध्येय को तो नहीं साध पाता, अपि तु उसका दुरुपयोग करके और भी पतित हो जाता है। इसीलिए कहा गया है–

**अज्ञस्याप्रबुद्धस्य सर्वं ब्रह्मेति यो ब्रूयात् ।**
**महानिरयजालेषु स हि तेन नियोजितः ।।**

अर्थात् अज्ञानी और अप्रबुद्ध व्यक्ति को 'सभी ब्रह्म है' इस प्रकार यदि कोई उपदेश देता है, तो समझना चाहिए कि वह उसको घोर नरक में भेज रहा है। इसी प्रकार असाधारण षट्स्थल तत्त्व का उपदेश अयोग्य व्यक्ति को देने से, बालक को कठोर आहार देने से वह उसके अनारोग्य का कारण बनने के जैसे, वह उसका पतन का कारण बन सकता है। अतः यहाँ षट्स्थल ज्ञान की गोपनीयता के साथ उसके अनधिकारी को उपदेश न देने की बात भी कही गई है।

## स्थल-शब्दार्थ

**अहमेव जगत्स्रष्टा पुनर्मय्येव लीयते ।**
**अहमेव स्थलं विद्धि षड्विधं मम रूपकम् ।।** (पारमे. ६.७)

इस आगमोक्ति के अनुसार स्थल शब्द का अर्थ भगवान् शिव है। लोक में स्थल का अर्थ स्थान होता है। तत्त्व ही इस प्रपञ्च के सभी तत्त्वों का मूल स्थान होने के कारण परशिव को स्थल कहा जाता है। अनुभवसूत्रकार श्री मायीदेव भी लिखते हैं—

**यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः ।**
**लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः ।।**
**स्थकारः स्थानवाची स्याल्लकारो लयवाचकः ।**
**तयोः कारणभूतं यत् तदेव स्थलमुच्यते ।।**

(अनु. सू. २.३-४)

## स्थल-भेद

स्थलशब्द के वाच्य भगवान् शिव स्वयं उपास्य और उपासक के रूप में दो भागों में विभक्त हो जाते हैं। वीरशैवदर्शन में उपास्य को लिङ्ग और उपासक को अङ्ग कहा जाता है। वह लिङ्गतत्त्व पुनः आचारलिङ्ग, गुरुलिङ्ग, शिवलिङ्ग, जङ्गमलिङ्ग, प्रसादलिङ्ग तथा महालिङ्ग के भेद से छः प्रकार का होता है। इनका उपासक अङ्गस्थल भी भक्त, माहेश्वर, प्रसादी, प्राणलिङ्गी, शरण तथा ऐक्य नाम से छः प्रकार का होता है। एक अर्थ में देखा जाय, तो ये षट्स्थल स्थल शब्दवाच्य भगवान् शिव के ही विभक्त रूप हैं। अत एव पारमेश्वरागम में–

**अहमेकः परानन्दः परमात्मा सदाशिवः ।**
**सृष्ट्वा मायामयीं शक्तिं तथाऽहं षड्विधोऽभवम् ।।**
**भक्तो माहेश्वरश्चैव प्रसादी प्राणलिङ्गकः ।**
**शरणः शिवलिङ्गैक्यः स्थलषट्कं मम प्रियम् ।।**

इस प्रकार भगवान् शिव के ही भक्त आदि षड्विध रूप होने की बात कही गयी है। वे ही षट्स्थल हैं। उपास्यभूत लिङ्गतत्त्व के छः प्रकार का होने के कारण ही उपासक अङ्गस्थल भी छः प्रकार का होता है।

इन स्थलों के छः प्रकार के होने में और भी एक कारण है। वह यह है– योगशास्त्र में प्रत्येक मनुष्य के शरीर में विभिन्न स्थानों में मूलाधार, स्वाधिष्ठान, मणिपूरक, विशुद्धि, आज्ञा तथा पश्चिमशिखा नामक चक्रों की स्थिति बताई गई है। साधक विभिन्न साधनाओं के द्वारा क्रमशः इन चक्रों का भेदन कर समाधि को प्राप्त होता है। प्रत्येक मनुष्य के शरीर में छः प्रकार के चक्र स्थित होने के कारण उनकी साधना करने वाले साधक भी छः प्रकार के होने चाहिए, अर्थात् छः अवस्थाओं से

गुजरना चाहिए। इस उद्देश्य से वीरशैव धर्म में छः स्थल माने गये हैं। श्री १००८ जगद्गुरु डॉ. चन्द्रशेखरशिवाचार्य महास्वामी जी ने "शक्तिविशिष्टाद्वैततत्त्वत्रयविमर्शः" (पृ. २३१-३३८) नामक संस्कृत ग्रन्थ में किस स्थल का साधक किस चक्र की उपासना करता है, इसकी चर्चा की है। परन्तु इस पारमेश्वरागम में षट्स्थलसाधना में निरत साधकों की बाह्य अवस्थाओं को दृष्टि में रखकर उनके आचार-विचार, व्यवहार आदि के बारे में ही अधिक चर्चा है। यहाँ प्रतिपादित भक्त आदि के लक्षणों से उनके आन्तरिक भाव की भी अभिव्यक्ति परोक्षरूपेण हो सकती है, यह दूसरी बात है। अब पारमेश्वरागम के आधार पर षट्स्थल तत्त्वों का निरूपण किया जायेगा।

**१. भक्त**

**"शिवे भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते"** (सि. शि. ५.२५) श्रीसिद्धान्तशिखामणि की इस उक्ति के अनुसार जिसके मन में भगवान् शिव के प्रति भक्ति उत्पन्न होती है, उसे **भक्त** कहा जाता है। शिव के निराकार होने के कारण उसकी पूजा आदि साक्षात् सम्भव नहीं होती। अतः वीरशैव धर्म में गुरु, लिङ्ग तथा जङ्गम इन तीनों को भगवान् शिव का साकार रूप माना जाता है, जिनकी सेवा, पूजा आदि करने से भगवान् शिव तृप्त होते हैं और अपनी पूजा से जो फल प्राप्त होता है, वह फल इनकी पूजा करने से भी प्रदान करते हैं। अत एव पारमेश्वरागम में–

**गुरौ च जङ्गमे लिङ्गे तारतम्यविशेषतः।**
**पूजयेत् त्रिविधं रूपं तद्भक्तस्थलमुच्यते।।** (पारमे. ६.९)

इस प्रकार कहा गया है। इस उक्ति के अनुसार गुरु, लिङ्ग और जङ्गम इन तीनों को भगवान् शिव के तीन रूप मानकर श्रद्धा-भक्ति के द्वारा जो उनकी पूजा करता है, वह भक्त कहलाता है और उसके द्वारा अनुष्ठित आचार भक्तस्थल कहलाता है।

**"साक्षात् भर्गो नराकृतिः"**

**अप्रत्यक्षो महादेवो सर्वेषामात्ममायया।**
**प्रत्यक्षो गुरुरूपेण वर्तते भक्तिसिद्धये।।** (सि.शि. ५.५३)
**अपरिच्छिन्नमव्यक्तं लिङ्गं ब्रह्म सनातनम्।**
**उपासनार्थं भक्तानां परिच्छिन्नं स्वमायया।।** (सि.शि. ४.३५)
**तद्यथाशक्ति सम्पूज्या जङ्गमा हि हितेप्सुना।**
**यदमी मानुषाकाराः प्रत्यक्षपरमेश्वराः।।** (च.ज्ञा.कि. ४.३०)

इत्यादि श्रुति, सिद्धान्तशिखामणि तथा चन्द्रज्ञानागमों के वचन गुरु-लिङ्ग-जङ्गमों

के शिवरूप होने में प्रमाण हैं। अतः भक्त इनको भगवान् का रूप मानकर उनकी पूजा आदि करता है।

## २. माहेश्वर

षट्स्थलों में माहेश्वर का दूसरा स्थान है। "**महेश्वरस्यायं माहेश्वरः**" इस व्युत्पत्ति के अनुसार महेश्वर शिव जिसको अपना मानता है और जो शिव को ही अपना सब कुछ मानकर "**त्वमेव माता च पिता त्वमेव...**" इस भाव से उसकी आराधना करता है, वह **माहेश्वर** कहलाता है। पूर्वोक्तरीत्या गुरु-लिङ्ग-जङ्गम भगवान् शिव के ही रूप होने के कारण "**यस्य देवे परा भक्तिः यथा देवे तथा गुरौ**" (श्वेता. ६.२३) इस श्रुतिवचन के अनुसार गुरु आदि की आप्त भाव से सेवा, पूजा आदि करने वाले को माहेश्वर कहा जाता है। पारमेश्वरागम में भगवान् शिव कहते हैं–

**यो गुरूक्तेन मार्गेण लिङ्गपूजारतः सदा।**
**जङ्गमानर्चयेच्छक्त्या स हि माहेश्वरः स्मृतः।।**
**त्रिकालमर्चयेल्लिङ्गं मम भक्तेषु भक्तिमान्।**
**स्वमताचारनिरतः स वै माहेश्वरः स्मृतः।।**

(पारमे. ६.१३-१४)

स्थूल दृष्टि से देखने पर यहाँ भक्त और माहेश्वर के लक्षणों में समानता दिखाई पड़ती है, किन्तु उन साधकों के भाव में व्यत्यास होते ही हैं। भक्तस्थल के साधक के मन में गुरु-लिङ्ग-जङ्गमों के प्रति जो भक्ति रहती है, वह श्रद्धा के रूप में होती है और वही भक्ति माहेश्वर स्थल के साधक में आकर निष्ठा के रूप में परिवर्तित हो जाती है। अत एव माहेश्वर स्थल के साधक में रहनेवाली भक्ति का नाम निष्ठाभक्ति है। मायीदेव ने 'अनुभवसूत्र' में कहा है–

**नैष्ठिकी भक्तिरित्येव कीर्तिता भक्तितत्परैः।**
**तया माहेश्वरं नाम स्थलकस्य स्वरूपतः।।** (अनु.सू. ५.७३)

तात्पर्य यह है कि भक्त में स्थित श्रद्धा-भक्ति ही जब निष्ठा-भक्ति बन जाती है, अर्थात् स्थिर हो जाती है, तब भक्त माहेश्वर हो जाता है। वस्तुतः श्रद्धा और निष्ठा दोनों भक्ति की विभिन्न अवस्थाओं के नाम हैं। भक्ति जब विचलित होने की सम्भावनाओं से ग्रस्त होती है, अर्थात् पूर्ण विकसित नहीं होती, तब श्रद्धा कहलाती है। वही जब स्थिर होकर पूर्ण विकसित हो जाती है, तब निष्ठा भक्ति कहलाती है। इसीलिए निष्ठा शब्द की व्युत्पत्ति "**निश्चयेन तिष्ठतीति निष्ठा**" इस प्रकार बताई जाती है। अत एव सिद्धान्त-शिखामणि में माहेश्वर की लिङ्गपूजा आदि में स्थित निष्ठा का वर्णन इस प्रकार किया गया है –

**अपगच्छतु सर्वस्वं शिरच्छेदनमस्तु वा ।**
**माहेश्वरो न मुञ्चेत लिङ्गपूजामहाव्रतम् ।।** (सि.शि. १०.२२)

इस प्रकार भक्त और माहेश्वर के आचरण समान लगने पर भी भाव की भक्ति में किञ्चित् व्यत्यास रहता है ।

### ३. प्रसादी

प्रसाद का अर्थ– अनुग्रह, प्रसन्नता और भगवान् को अर्पित अन्न होता है । **''प्रसादोऽस्यास्तीति प्रसादी''** इस व्युत्पत्ति के अनुसार जिस पर भगवान् का अनुग्रह हुआ है, जिसका मन सदा प्रसन्न रहता है और जो सदा भगवान् को समर्पित अन्न का ही सेवन करता है, वह **प्रसादी** कहलाता है । भगवान् का अनुग्रह और मन की प्रसन्नता भगवदर्पित अन्न का सेवन करने से प्राप्त होती है । **''अन्नमयं हि सौम्य मनः''** इस श्रुतिवचन के आधार पर जो जिस प्रकार के अन्न का सेवन करता है, वह उस प्रकार का मन वाला हो जाता है । विशुद्ध अन्न ही मनःशुद्धि का कारण है । अन्न की शुद्धि भगवान् को अर्पण करने से होती है । उस अन्न का सेवन करने से मन प्रसन्न होता है (सि.शि. ११.३-१०) । इसलिए भगवदर्पित अन्न को **प्रसाद** कहा जाता है और उसका सेवन करनेवाला प्रसादी कहा जाता है । अत एव पारमेश्वरागम में—

**योऽनर्पितं महेशानि नार्चयित्वापि जङ्गमान् ।**
**नाश्नाति न त्यजेन्मह्यमर्पितं कृच्छ्रगोऽपि वा ।।**
**सोऽयं प्रसादी कथितः सोऽहमेव न संशयः ।।**

(पारमे. ६.१७-१८)

प्रसादी स्थल के साधक के जो आचरण उपदिष्ट हैं, इनके अनुसार भगवान् को बिना अर्पित किये और जङ्गमों की पूजा किये बिना भारी सङ्कट आने पर भी जो भोजन नहीं करता और भगवान् को समर्पित भोजन का कभी परित्याग नहीं करता, उसे प्रसादी कहते हैं । यहाँ मुख्यतया यह संमझना चाहिए कि जो भगवान् के प्रसाद को ही परम श्रद्धा से ग्रहण करता है और ग्रहण किये गये प्रसाद का परित्याग नहीं करता, वह प्रसादी है ।

## शिवोपासना के सभी अधिकारी

वीरशैव धर्म में अध्यात्मसाधना में और धर्म का सम्पादन करने में स्त्री तथा पुरुष को समान अधिकार दिया गया है । अतः पुरुष के समान स्त्री भी षट्स्थल साधना में प्रविष्ट होकर भक्त, माहेश्वर, प्रसादी आदि बनकर अन्त में मोक्ष पा सकती है । जब कोई स्त्री चाहे वह विवाहिता हो अथवा अविवाहिता प्रसादीस्थल में प्रवेश करती है, तो उसे भी भगवदर्पित अन्न का ही भोजन करना पड़ता है ।

यहाँ यह प्रश्न उठता है कि स्त्रीधर्म का प्रतिपादन करते समय धर्मशास्त्र में नारी को प्रतिदिन अपने पति के द्वारा खाकर छोड़े गये अन्न (भर्तृशेष) का सेवन करने का विधान है; भर्तृशेष अन्न को भगवदर्पण करना तो उचित नहीं, बिना अर्पण किये खाये, तो वह प्रसादीस्थल के आचरण के विरुद्ध होता है। तब क्या उपाय करना चाहिए ?

कारणागम में भगवान् शिव ने इस प्रश्न का समुचित उत्तर दिया है– भगवान् को अन्न का अर्पण दो प्रकार से होता है– भोगरूप तथा अनुज्ञारूप। भगवान् को भोग के लिए अर्पण करना भोगरूप है और अपने भोग्य पदार्थों को केवल भगवान् की आज्ञा प्राप्त करने के लिए उसे अर्पण करना अनुज्ञारूप है। भगवान् को अर्पण करने के लिए अयोग्य वस्तुओं का यदि अनिवार्य रूप से उपयोग करना पड़े, तो अनुज्ञारूप अर्पण कर उसे प्रसाद के रूप में स्वीकार करना चाहिए। पतिव्रता नारी भर्तृशेष का सेवन करते समय अनुज्ञारूप अर्पण कर तथा स्वतन्त्र अन्न का भोजन करते समय भोगरूप अर्पण कर प्रसाद को ग्रहण कर सकती है। इसीलिए कहा है–

**सुवासिनी समर्च्यापि भोगरूपनिवेदनम्।**
**अन्येनैव विधायानुज्ञाप्य तद् भर्तृशेषकम्।।**
**उभयं चैव भुञ्जीत भक्तियुक्ता मयि प्रिये।।** (कारणा. ५.७५)

इस प्रकार नारी भी प्रसादी बनकर उस स्थल के नियमों का आचरण कर सकती है और उसमें उसका पतिव्रता धर्म अवरोधक नहीं बनता। अत: प्रसादी स्थल के साधक को चाहिए (वह पुरुष हो या स्त्री) कि वह भगवदर्पित प्रसाद का ही सेवन करे और स्वीकृत प्रसाद का परित्याग न करे।

यदि भगवान् को अर्पित प्रसाद सर्वथा अत्याज्य है, तो पति अपनी पत्नी को, गुरु अपने शिष्यों को किस प्रकार अपना शेष प्रसाद प्रदान करे ? इस प्रश्न का भी उत्तर कारणागम में मिलता है–

**दारादिभ्यः प्रसादस्य नारकिभ्यो जलस्य च।**
**प्रदानेनार्पितत्यागं दोषो नैवास्ति भामिनि।।**
**त्यागस्याविधिमूलस्य निषेधविषयत्वतः।**
**यथाऽविधिकृतत्यागो न दोषो गुण एव हि।।**
(कारणा. ५. २६-२७)

अर्थात् शिष्य तथा पत्नी को प्रसाद देने से प्रसादत्याग का दोष नहीं होता, क्योंकि जहाँ प्रसादत्याग का विधान नहीं किया गया है, वहाँ उसका त्याग करना दोषयुक्त माना जाता है। गुरुप्रसाद का सेवन करना एवं पति का प्रसाद ग्रहण करना,

पारमेश्वरागम में २३ पटल हैं। इसमें शैवों के भेद, वीरशैवों के प्रमुख तीन भेद बता कर उनके दीक्षा-विधान, आचार-विचार और पूजा-पद्धति के बारे में बहुत ही विस्तृत विवेचन किया गया है। इसके पञ्चम पटल में लिङ्ग धारण दीक्षा का विस्तार से वर्णन है। यहाँ बताया गया है कि वीरशैव दीक्षा के बाद स्त्री-पुरुष, जाति-धर्म, वर्णाश्रमधर्म आदि के भेद सर्वथा वर्जनीय हो जाते हैं। इस बात को स्वयं परमेश्वर देवी पार्वती से इस प्रकार कहते हैं—

**ये सन्ति जातिभेदास्तानेकवच्छिवयोगिनः।**
**पश्येदखिलजातिस्थानेकमातृसहोदरान् ।।**
**न स्त्रीभेदो न पुंभेदो जातिवर्णाश्रमादिकम्।**
**सर्वातीतमिदं विद्धि वीरशैवमतं मम।।**
**यदनायासतो देवि भोगमोक्षौ करस्थितौ।**
**धारणान्मम लिङ्गस्य पूजनाच्च निरन्तरम्।।**

फिर शरीरावस्था के अभेद को बताते हुए कहते हैं—

**न बालयुववृद्धादितारतम्यधिया भजेत्।**
**प्रत्युत्तिष्ठेत् तदान्योन्यं दृष्टमात्रेण लिङ्गिनः।।**

अधिक क्या कहना है, 'लिङ्गसार' में नारी को गङ्गाजल के समान हर समय पवित्र बताया गया है—

**यथा विश्वेशनिकटाद् गङ्गा सूतकवर्जिता।**
**तथा लिङ्गाङ्किता भक्ताः पञ्चसूतकवर्जिताः।।**
**लिङ्गार्चनरता नारी सूतकी वा रजस्वला।**
**रविरग्निर्यथा वायुस्तथा कोटिगुणोज्ज्वला।।**

(ब्र. सू. श्रीकरभाष्य)

भगवान् श्रीकृष्ण ने स्त्री-शूद्र के प्रति सदयभाव दिखाते हुए कहा है—

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्।।**

(गीता, ९/३२)

इसी प्रकार दीक्षा ग्रहण में वीरशैव सम्प्रदाय स्त्री-शूद्रों को अधिकार देकर अपनी महत्ता को प्रतिष्ठापित करता है।

●

# आगमेषु मन्त्रजपतत्त्वविवेचनम्

*डॉ. राजनाथत्रिपाठी*

**उपक्रमः**

**मननान्मन्त्रमाख्यातं त्राणकर्म जपः स्मृतः ।**
**मननत्राणकर्तृत्वाज्जप एव फलाश्रयः ।।**
**पारमेश्वरागमो वै सर्वानुग्रहकारकः ।**
**उपादिदेश शैवेभ्यः पञ्चाक्षरजपोत्तमम् ।।**

इह जानन्त्येव तत्त्वविदो यल्लोककल्याणाय सर्वजनलौकिकपारलौकिकसुखाय चागम एव युगानुसारिसर्वसाधनक्षमो मार्गः । तदुक्तं कुलार्णवतन्त्रे–

**कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः ।**
**द्वापरे तु पुराणोक्तः कलौ ह्यागमसम्मतः ।।** इति ।

निर्वाणतन्त्रे च– ''विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये'' इत्याद्युक्तम् ।

अतस्तन्त्रागमपन्था निर्विवादरूपेणास्माकं कृते प्रवर्तनायेष्टसाधनाय चालं वर्तते । तदुक्तं रुद्रयामले—

**यत्रास्ति योगो नहि तत्र भोगो**
**यत्रास्ति भोगो नहि तत्र योगः ।**
**शिवापदाम्भोजयुगार्चकानां**
**योगश्च भोगश्च करस्थ एव ।।**

अथवा– **श्रीसुन्दरीसाधनतत्पराणां योगश्च भोगश्च करस्थ एव ।।** इति ।

तस्मादत्र शास्त्रे इहलोके सर्वत्र पुत्र-पौत्र-कलत्र-सुख-समृद्धि-स्वास्थ्य-वैभवाद्युपभोग-पूर्वकमन्ते शिवसामरस्येन मोक्षावाप्तिः सिद्धा ।

**जपशब्दनिरुक्तिः**

'जप उच्चारणे वाचि च' इति भ्वादिगणपठिताद्धातोः 'जपतीति जपः' इति

व्युत्पत्तौ जपशब्दो निष्पद्यते। अतो जपस्य भाव उच्चारणं भवति। व्याकरणशास्त्रस्य सिद्धान्तकौमुद्यां–'जपो नामोपांशुप्रयोग:, यथा जले निमग्नस्य' इत्युक्तम्। तत्रोच्चारणमान्तर-बाह्यभेदेन द्विविधं भवति। तस्मादान्तरो जपो जप: पूर्वं बहिर्भावेनोच्चारणपुरस्सरं दृश्यते। आदौ जप्तारो मन्त्राभ्यासे उच्चारणपूर्वका एव भवन्ति, त एव मन्त्रा अभ्यासे सति मानसोपांशुभेदेन जपक्रियामनुश्रीयन्त इति सर्वत्र दरीदृश्यते उपासनशास्त्रेषु जपविधि:।

किञ्च, 'जप' इति धातोर्वाचीत्यर्थे मन्त्रपुरस्सरध्यानपूर्वकं वाचश्चतुर्धात्वे जपोऽपि उच्चारणोपांशुमानसादिभेदेन अनेकशो विभजत इति जपतत्त्ववेत्तारो विदन्त्येव। तदुक्तं मनुस्मृतौ—

**एतदक्षरमेतां तु जपन् व्याहृतिपूर्विकाम्।।** इति।

अत्र व्याहृतिर्व्यवहार:, मन्त्रस्य तत्तदर्थे सन्निवेश:। सा च स्वाहा-नम:-फडन्तादिभेदेन षड्विध: सङ्गच्छते। तदुक्तं गोभिलगृह्यसूत्रे–"तत: सप्रणवां सव्याहृतिकां गायत्रीं जपेत्" इति। सप्तशतीपाठारम्भे तद्विषयकं जपं विधाय चण्डीपाठं कुर्यादिति विधिनिबन्धनेऽप्युक्तम्–"जपेत् सप्तशतीं मध्ये" इति। एवं जपशब्दस्त्रिलिङ्गेषूपयुज्यते।

## वर्तमानकाले जपस्य ज्यायस्त्वम्

पूर्वमत्र युगानुसारिशास्त्रप्रवृत्तिरुक्ता। तदनुरोधेन विष्वक्सेनसंहितायामुच्यते—

**साधनं पुरुषार्थानां सन्ति यागा: सहस्रश:।**
**विशेषत: कलियुगे जपयाग: प्रशस्यते।।** इति।

अतो जगति यावन्त: शैव-शाक्त-वैष्णव-गाणपत्य-सौर-बौद्ध-जैनादयोऽनेके आगमा: सम्प्रदायाश्च दरीदृश्यन्ते, तेषु सर्वेषु जपस्यातितरं महत्त्वमवसीयते।

स च जपो न केवलं पुरुषार्थचतुष्टयस्य साधक:, अपि तु परमात्मनोऽनिर्वचनीयस्य प्रकाशस्य स्वेष्टदेवतायाश्चिराभिलषितस्य साक्षात्कारस्य महन्माध्यमो वरीवर्ति। अतोऽस्मिन् युगे काले च जपस्य महन्महत्त्वं वर्तते। एतदनुरोधेनैव मेरुतन्त्रे उक्तम्—

**कामक्रोधादिभिर्व्याप्ते जनैस्त्रिभिर्विनिर्जिते।**
**क्व शिष्य: क्व गुरुर्मन्त्र: क्व तप: क्व च सिद्धय:।।**
**जप एव कलौ श्रेयान् शालग्रामार्चनं तथा।।** इति।

एतेन वर्तमाने काले आगमतन्त्रोक्तमार्गेण जपानुष्ठानमेव ज्यायानिति निश्चीयते। व्यवहारे एवं दृश्यते यदन्यानुष्ठाने साधनबाहुल्यमपेक्षते। तद्विना अन्योपाय: साफल्यं न

भजते, परं मन्त्रानुष्ठानं जपो वा अत्रागमे साधकस्य यत्र कुत्रापि स्थितौ मार्गे वा सामान्येनानुष्ठातुं शक्यते। अत एव विष्वक्सेनसंहितायां "विशेषत: कलियुगे जपयाग: प्रशस्यते" इत्युक्त्या वैदिकागमिकयागेषु युगानुसारेण जपयाग एवास्माभिरनुष्ठेय इति नात्र काचिद् विचिकित्सा। मेरुतन्त्रे च—

**जपात् सिद्धिर्जपात् सिद्धिर्जपात् सिद्धिर्न संशयः।**
**यथा महागुणैर्वश्यो जायते गुणवान् प्रभुः।।**
**तथाऽहं त्वं च विष्णुश्च जपादेव फलप्रदः।।**

इत्यादिभिर्जपस्याधुना अवश्यं कर्तव्यत्वमस्मभ्यं निर्दिष्टम्। गीतायाञ्च–'यज्ञानां जपयज्ञोऽस्मि' इति वचनेन प्रकृष्टयज्ञेषु जपयज्ञस्य महत्त्वं प्रतिपादितं दृश्यते। एतेनैव कारणेन पारमेश्वरागमेऽपि–

**नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम्।**
**जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम्[1]।।**

इत्युक्तम्।

शिवमहापुराणस्य वायवीयसंहिताया उत्तरभागे उपमन्युश्रीकृष्णसंवादे पाशुपततत्त्व-निरूपणे जपस्य तद्द्वारा भगवत: सपरिकरस्य शिवतत्त्वस्य जपाज्ज्ञानाच्च सर्वसिद्धयो जायन्त इत्युपपादितम्। तदुक्तं पारमेश्वरागमे—

**अन्त्यजो वाऽधमो वापि मूर्खो वा पण्डितोऽपि वा।**
**पञ्चाक्षरजपे निष्ठो मुच्यते पाशबन्धनात्[2]।।** इति।

एवं हि जपो नाम शास्त्रविधानेन मन्त्रवर्णोच्चारणमित्येक: पक्ष:, अपरश्च मन्त्ररहस्यार्थानुस्मरणपूर्वकं गुरुदेवतामन्त्रवर्णात्मनामैक्यानुभावनं जप इति। भास्कर-रायदीक्षितदेशिकाश्च सौभाग्यभास्करे मन्त्रजपपरिभाषायाम्–"अवस्थापञ्चकशून्यषट्क-विषुवसप्तकचक्रनवकविभावनादिरूपं चिह्नं जप:" इति जपस्य लक्षणमाहु:। तैरेव वरिवस्यारहस्ये जपस्य लक्षणमुपपादयद्भि:—

**एवमवस्थाशून्यविषुवन्ति चक्राणि पञ्च-षट्-सप्त।**
**नव च मनोरर्थान् स्मरतोऽर्थोच्चारणं तु जपः।।**

इत्युक्तम्। अत्रैव प्रकरणे स्वव्याख्याने 'मन्त्रस्यार्थानुसन्धानस्य विधाया अक्षराणा-

१. पारमेश्वरागमे, ११ पटले-२५।
२. तत्रैव, २६।

मष्टपञ्चाशतो मध्ये आद्यकूटद्वितीयबिन्द्वादिनवकद्वयप्रहाणेनावशिष्टानां चत्वारिंशतोऽक्षराणा-मुच्चारणं जपो जपपरवाच्यम्' इत्युक्तम्।

म. म. पं. गोपीनाथकविराजमहोदयाश्च—

**संयम्येन्द्रियसंचारं प्रोच्चरेन्नादमान्तरम्।**
**एष एव जपः प्रोक्तो न तु बाह्यजपो जपः।।**

इत्यनेन विधिपूर्वकमनेकविधमन्त्रवर्णोच्चारणं बाह्यस्य, मध्यमाभूमौ नादेन सह मन्त्रस्य स्वभावतो ध्वननम्, परमभावमभिलक्ष्य भूयो भूयो भावनावान्तरस्य लक्षणमुद्घोषयन्ति। पञ्चाक्षरमन्त्रजपमुखेन पारमेश्वरागमेऽपि जपमाहात्म्यमुक्तम्–

**जपेत् पञ्चाक्षरं शैवं भुक्तिमुक्तिफलप्रदम्।**
**सर्वधर्मान् परित्यज्य शैवं पञ्चाक्षरं जपेत्।।**
**तिष्ठन् भुञ्जन् स्वपन् गच्छन् जाग्रन्नपि हसन्नपि।**
**उपविशन् प्रबुध्यन् वा शैवं पञ्चाक्षरं जपेत्।।**
**व्याजेनाखिलभेदेन शैवं पञ्चाक्षरं जपेत्।।** इत्याद्युक्तम्।

एतेनागमशास्त्रे जप उपजीव्यत्वमुपगच्छतीति सुधिय एव प्रमाणम्।

## जपप्रकारः

सर्वत्र तन्त्रागमशास्त्रे जपस्यानेके प्रकारा निगदिताः। तेषां रहस्यं तु विशेषतस्त्रिप्रकारे एवावशिष्यते। तद्यथा—

**मनः संहृत्य विषयान् मन्त्रार्थगतमानसः।**
**न द्रुतं न विलम्बं च जपेन्मौक्तिकपङ्क्तिवत्।।**
**जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः।**
**धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम्।**
**उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः।।**
**जिह्वादौ चानयेत् किञ्चिद् देवतागतमानसः।**
**किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः।।**
**मन्त्रमुच्चारयेद् वाचा वाचिकः स जपः स्मृतः।**
**उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः।।**
**जिह्वाजपशतगुणः साहस्रो मानसः स्मृतः।**
**जिह्वाजपः स विज्ञेयः केवलं जिह्वया बुधैः।।**

इत्याद्युक्तम्। ज्ञानार्णवे च—

**निगदेनोपांशुना वा मानसेनाथवा जपेत्।**
**निगदः परमेशानि स्पष्टं वाचा निगद्यते।।**

इत्युक्तम्। स्वच्छन्दतन्त्रे हि षड्विधो जप उक्तः। तथैव तन्त्रसारेऽपि—

**जपस्तु षड्विधः प्रोक्तस्तत्प्रकारोऽयमुच्यते।**
**वाचिकं मानसं चैव यौगिकं योगवाचिकम्।।**
**योगमानसिकं चैव वाङ्मानसिकयौगिकम्।।**

इत्युक्तम्। एतेन वाचिक-मानस-यौगिक-योगवाचिक-योगमानसिक-वाङ्मानसिक-योगेत्यादिभेदेन जपः षड्विध उपपादितः। तत्र षण्णां जपानां किं स्वरूपमित्युत्कण्ठायां तत्रैवोक्तम्—

**वाचा केवलयोच्चार्य मन्त्रं देवीं विभाव्य च।**
**जपेद्यत् परमेशानि वाचिकं तत्प्रकीर्तितम्।।**
**देव्या रूपं च सञ्चिन्त्य सावधानेन चेतसा।**
**मन्त्रस्याप्यनुसन्धानं मानसं परिकीर्तितम्।।**
**त्रिस्थानेन त्रिबीजानि क्रमात् सञ्चित्य मार्गतः।**
**आरोहो यौगिकं प्रोक्तमुच्यते योगवाचिकम्।।**
**लक्ष्ये मनः समायोज्य वाचा मन्त्रं जपेच्छिवे।**
**योगवाचिकमेतत् स्याद्योगमानसिकं श्रृणु।।**
**लक्ष्येण मानसं पूर्वं संयोज्य मनसा जपन्।**
**योगमानसिकं विद्यादथान्यदपि चोच्यते।।**
**मनसाऽपि जपेन्मन्त्रं बीजानारोहणक्रमात्।**
**वाङ्मानसिकयोगाख्यं जपमेतदनुत्तमम्।।** इति।

इत्थं प्रपञ्चितं जपकर्म बाह्याभ्यन्तरभेदेन मुख्यतो द्विविधमेव उपांशोर्मानसान्तर्भावित्वमेव। प्रथमकल्पे मन्त्रजपे बाह्य एव जपः प्रारभ्यते, तदनु भावनाबलाच्छनैः शनैर्मन्त्र-मन्त्रार्थ-मन्त्रचैतन्यगुरोर्ध्यानपुरस्सरं मन्त्रमन्तःप्रस्फुटितं सदन्तरेवाभ्यासादुपासनबलाच्च जप्यो भवति। एतदनन्तरं मूलादारभ्य सप्तदलभेदेन प्ररोहक्रमेण मन्त्रश्चिदानन्दमये सहस्रारे शिवशक्त्योः परमधाम्नि प्रतिष्ठते। एतत्सर्वैरेव सफलसाधकैर्गुरूपासनयुतैरनुभूयत एव एतन्निखिलं रहस्यं महासाधकैर्भास्कररायदीक्षितदेशिकैः स्ववरिवस्यारहस्ये उद्घाटितमिति तत एवावधेयम्।

शक्तिविशिष्टाद्वैते इह वीरशैवसिद्धान्ते जपरहस्यं सबहुमानं सर्वत्र स्वीकृतम्। इदमत्रावधेयम्–मन्त्रावयवभूतानामक्षराणामर्थो मन्त्राणां मन्त्रेश्वररूपतया शिव एवादिः गुरुर्विद्यते, स एवादिरुपदेष्टा तस्यैव ख्यापनं भगवता पाणिनिना "उपदेशेऽजनुनासिक इत्" इति सूत्रे उपदेशपदेनोक्तम्, व्याख्याकाराश्चोपदेश आद्योच्चारणमित्युक्तवन्तः। आद्योचारयिता महेश्वर एव। स एवादिगुरुः। एवमाद्योच्चारणभूतानि माहेश्वरसूत्राणि 'अइउण्' इत्यादीनि प्रथमोच्चारणभूतानि आचार्यैरुपदिश्यन्ते। नागेशभट्टाश्च श्रुतिमूलकमेतदुच्चारणं मत्वा तत्प्रमाणत्वेन लघुशब्देन्दुशेखरग्रन्थे–"इदमक्षरशः समनुक्रान्तो ब्रह्मराशिः। अत्र ब्रह्मराशिरित्यस्य वर्णराशिरित्यर्थः, न भुक्त्वा न नक्तं प्रब्रूयात्" इत्युक्तम्। एतदर्थमेव नन्दिकेश्वरकाशिकायामुक्तम्—

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।**
**उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्॥** इति।

व्याकरणशास्त्रे 'हलन्त्यम्' इति सूत्रोपपादनान्ते 'इति माहेश्वराणि सूत्राणि' इत्युक्तम्। व्याकरणे अणादिः संज्ञार्थानि, अन्यत्र सनकादिसिद्धानामिष्टसाधकान्येतानि सूत्राण्युपदिष्टानि। एतेनैवाशयेन शिवसूत्रे शिवं गुरुं मत्वा 'गुरुरुपायः' इत्युपपादितम्। वस्तुतस्तु सृष्टेरादौ इच्छाशक्तिसंवलितः शिवो ज्ञान-क्रियाशक्तीनां सिद्धये सर्वेभ्यो ज्ञानाय वर्णसमाम्नायस्योपदेशः कृत इति। ततश्च स्वच्छन्दतन्त्रोक्तम्–"आगमो ज्ञानमित्युक्तं ह्यनन्ताः शास्त्रकोटयः" इति रीत्या माहेश्वरचतुर्दशसूत्रेषु आदिवर्णोऽकारः, अन्त्यश्च हकार इति। उभयोः सम्मेलनेन अकारहकारयोर्योगे 'अहम्' इति निष्पद्यते। अद्वैतवेदान्ते महावाक्येषु 'अहं ब्रह्माऽस्मि' इति महावाक्यार्थ उपपन्न एव। एवमेव शैवाद्यागमेषु 'शिवोऽहं', 'भैरवोऽहम्' इत्यादयः शिवभावा अपि सङ्गच्छन्ते। अत्रेदमप्यवधेयं यदागमेषू-पदिष्टोऽहन्तेदन्ताभावोऽप्यत्रैव सङ्गच्छते, इदं जगदहं शिवशक्त्योश्च सामरस्यम्। एवमेव जपे जप्यस्याहं परं परमेश्वरस्येदन्ता अर्थरूपेण जगदात्मना इदं सम्पद्यते। अतोऽर्थरूपस्य जगतः शब्दरूपस्य शिवशक्त्योः सामरस्यस्य च रहस्यं शास्त्रान्तरेष्वपि कालिदासादयः कवय ऊरीकुर्वन्ति–"वागर्थाविव सम्पृक्तौ......., पार्वतीपरमेश्वरौ" इत्यादिवचोभिः। आगमेषु शब्दार्थयोः शक्तिशिवरूपता च स्वीकृतैव। तथा हि वायवीयसंहितायामुक्तम्—

**शब्दस्वरूपमखिलं धत्ते शङ्करवल्लभा।**
**अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः॥** इति।

एवमखिलं विश्वप्रपञ्चं नामरूपात्मकं सत् 'नामरूपे व्याकरवाणि' इत्युपनिषदन्तर्गर्भित-मन्त्र-मन्त्रार्थ-मन्त्रचैतन्य-चक्र-देवता-विद्या-निष्कल-निरवयव-परमेश्वराभिन्नगुरूणामात्म-

नैक्यानुसन्धानं तत्तन्मन्त्रेषु षडक्षरपञ्चाक्षरमन्त्रेषु वा समुल्लसति। इयमेव भावनार्घ-लिङ्गयोः स्थापने पूजने च शिवशक्तिशब्दार्थनामरूपादिरूपेण सर्वत्र समुपपद्यते।

किञ्च, मूलाधारे लसन्ती विसतन्तुतनीयसी परा सहस्रसूर्यप्रकाशा विद्यैव ममात्माऽस्तीति साधकस्य निरन्तरभावनैव शक्तिः, येन निष्कलेनाणुनाऽणुतरेण महता महत्तरेण निर्लक्ष्येण भावातीतेन व्योमातीतेन परमेश्वरतत्त्वेन सह विश्वातीतनिष्कलनिर्लक्ष्यस्य स्वगुरुप्रबोधितस्य निर्मलस्वभावस्य स्वात्मनः साधकद्वारैक्यानुप्रवेशो महातत्त्वप्राप्तिरिति। एतदखिलमर्थभावनया शिवस्याह्लादिन्या शक्त्या परापराम्बयैव ज्ञातुं शक्यते। इदमेव रहस्यं वीरशैवनये शक्तिमुखेन ज्ञातुं शक्यत इति सर्वं परिभाव्य शिवतोपपादने आचार्यैरुपदिष्टमिति सुधीधना एवात्र प्रमाणम्।

पारमेश्वरागमे एकादशपटले षडक्षरी-पञ्चाक्षरी-मन्त्रयोरनुष्ठानं तद्विधिः, फलं च निगदितम्। तत्र वेदे वैदिकानुष्ठाने, उपनिषत्सु च सर्वत्र षडक्षरस्यैवानुष्ठानं कर्तव्यतयोपदिष्टम्, लोकेऽधुना देशकालाद्यनुरोधेन पञ्चाक्षरस्यैवानुष्ठानमुपदेशश्च युक्त इति चोपपादितम्। तद्यथा—

**वेदे च वेदशीर्षे चाप्युभयत्र षडक्षरः।**
**मन्त्रः स्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः[१]।।** इति।

अत्रेदं ध्येयम्—सर्वमन्त्राणि देवतारूपाणि साकाराणि भवन्ति। तत्र सर्वमन्त्राणां जपे प्रणवः श्रोतृरूपः, रेफो मुखम्, स्वराः चक्षुषी, तदभिन्नाश्च वर्णा हृदयम्, प्राणाश्च सर्वागमेषु गुप्ता गुरुकृपातोऽवगन्तव्याः। तदुक्तं भूतडामरबीजकोशे—

**मन्त्राणां प्रणवः श्रोत्रं मुखं रेफः प्रकीर्तितः।**
**स्वराश्च चक्षुषी ज्ञेया मन्त्रविद्भिरनारतम्।।**
**अतिरिक्ताश्च ये वर्णा हृदयं परिकीर्तितम्।**
**असवोऽस्य परिज्ञेयाः सर्वतन्त्रेषु गोपिताः।।** इति।

एवं मेरुतन्त्रेऽपि—मन्त्रचैतन्यसूतकमृतकदोषशमनसेतुमहासेतुनिर्वाणज्ञानानि मन्त्र-जपानुष्ठानातिरिक्तानि भवन्ति। तदवश्यतया कर्तव्यानीति सर्वागमेषूक्तानि। पारमेश्वरागमेऽ-प्येतत्सर्वं विहितम्। तत्रैकैकमादाय विविच्यते किञ्चिद्—

मन्त्रचैतन्यं नाम मन्त्र-गुरु-देव-साधकात्मनामैक्यभावनम्, मन्त्राणामुच्चारणम्, जातकसूतक-मृतकसूतकञ्च विसर्जनम्। तद्दोषद्वयनिवृत्तये जप्यमन्त्रस्याद्यन्ते प्रणवं कृत्वा दशवारं पञ्चविंशवारं पञ्चाशद्वारं वा जपेन मृतकसूतकनिवृत्तिर्भवति। ब्राह्मण-

१. पारमेश्वरागमे - ११.४।

क्षत्रिय-वैश्यसाधकानां कृते प्रणवोपदेशः, अन्येषाञ्च कृते चन्द्रानुस्वारसंयुक्ताश्चतुर्दशस्वराः सेतुरिति मेरुतन्त्रस्य भावो सङ्गच्छते।

रुद्रयामले च ब्राह्मणक्षत्रिययोः प्रणवः, वैश्यस्य फडिति, शूद्रस्य च ह्रीमिति सेतुरित्युक्तः। महासेतुश्च सुन्दर्याः कालिकायाश्च स्वं स्वं बीजमेव। एवं हि निर्वाणं नाम प्रणवं मातृकाद्यञ्च समुच्चार्य, मूलमन्त्रं, वाग्भवबीजं च समुच्चार्य समस्तां मातृकां पुनः प्रणवमित्येवं पुटितमूलं मणिपूरके प्रजपेदिति। कुल्लुकामन्त्रस्तु तत्तद्देवतानां भिन्नभिन्नपद्धत्या जपनीयः। मन्त्रस्य कुल्लुकायाश्च ज्ञानं गुरूपदेशादेवावगन्तव्यमित्येतत्सर्वं रुद्रयामलोक्तं सङ्गच्छते।

एवं हि पारमेश्वरागमे प्रणवघटकः षडक्षरमन्त्रः सर्वसिद्धिदो भवति। प्रणवः सर्वमन्त्राणां प्राणः, साक्षाच्छिवरूप एवेति तत्रोक्तम्—

**अहं गुणत्रयातीतः सर्वज्ञः सर्वकृत् प्रभुः।**
**ओमित्यक्षरे मन्त्रे स्थितः सर्वगतोऽस्म्यहम्**।। इति।

एवमेव ब्रह्माण्डे यावन्ति ज्ञानानि, तानि सर्वाण्येव षडक्षरमन्त्रस्य भाष्यभूतान्येव[१]।

एवमत्र प्रकरणे पञ्चाक्षरशिवमन्त्रमाहात्म्यम्, पञ्चाक्षरी विद्या, तस्य ऋषि-च्छन्दो-देवता-वर्णानामधीशाः, षडङ्गानि, मन्त्रवर्णन्यासः, जपश्च सर्वं सातिशयेन विवृतं विद्यते। अत एतत्सर्वं गुरुकृपयैव सिद्ध्यतीति पारमेश्वरागमस्य सिद्धान्तमागमानुरोधेनैवोपपन्नमिति सुधीभिरूह्यम्। एवं हि—

**जपतत्त्वं विमृश्येदं ग्रथितं हि त्रिपाठिना।**
**मोदाय विदुषां नित्यं तोषाय परमात्मने।।**

**।। इति शिवम्।।**

●

---

१. पारमेश्वरागमे, ११.१।

# भस्म, रुद्राक्ष एवं लिङ्गधारण-दीक्षा

*डॉ. गोविन्द सप्तर्षि*

वन्दे गिरीन्द्रतनयाद्विरदाननाग्नि-
भूनन्दिभृङ्गिरिटिसेवितपादपद्मम् ।
पञ्चाननं फणिशशीभतरक्षुचर्म-
भूषं महेशमनिशं शिरसा गिरीशम् ।।
पाशाङ्कुशेष्टदविषाणकराग्रबीज-
पूरोज्ज्वलं तरुणदिव्यजटाप्रकाशम् ।
कोटीरकोटिशशिरेखमुमातनूजं
वन्दे गणेन्द्रमनिशं वरदानदक्षम् ।।

### उपक्रम

प्रस्तुत निबन्ध का प्रमुख विषय पारमेश्वरागम में भस्म, रुद्राक्ष एवं लिङ्गधारण दीक्षा है, तथापि शैव और वीरशैव मत की प्राचीनता के सम्बन्ध में कुछ विचार करना आवश्यक लग रहा है। भारतीय सनातन धर्म-दर्शनों में शैव और वीरशैव का एक प्रमुख स्थान है। वीरशैव धर्म शैव धर्म का ही एक प्रमुख भेद है। भगवान् शिव के सद्योजात, वामदेव, अघोर, तत्पुरुष और ईशान नामक पाँच मुखों से आविर्भूत पाँच शिवगणों के द्वारा इस मत, अर्थात् वीरशैव सम्प्रदाय की स्थापना हुई है। रेणुक, दारुक, घण्टाकर्ण, धेनुकर्ण और विश्वकर्ण ये पाँच शिवगण हैं। शिव के आदेश के अनुसार ये पाँचों शिवगण भूलोक में प्रत्येक युग के आरम्भ में अवतरित होकर वीरशैव धर्म की स्थापना करते आये हैं। इन पाँचों शिवगणों का कलियुग में क्रमशः अवतार का स्थान–कोल्लीपाक के सोमेश्वर लिङ्ग, उज्जैन के सिद्धेश्वरलिङ्ग, द्राक्षराम क्षेत्र के भीमनाथ लिङ्ग, श्रीशैल क्षेत्र के मल्लिकार्जुन लिङ्ग और काशी क्षेत्र के प्रसिद्ध विश्वेश्वर ज्योतिर्लिङ्ग माने गये हैं। इन्होंने अपनी महिमा की सिद्धि से ऊपर प्रदर्शित लिङ्गों से आविर्भूत होकर दिव्य देह धारण करके पाँच प्रमुख पीठों को स्थापित की। वे पाँच पीठ क्रमशः कर्णाटक के रम्भापुरी में वीरसिंहासन, कर्णाटक की उज्जयिनी में सद्धर्म

सिंहासन, उत्तराञ्चल के ऊखीमठ में वैराग्य सिंहासन, आन्ध्र प्रदेश के श्रीशैल क्षेत्र में सूर्य सिंहासन और उत्तर प्रदेश के काशी क्षेत्र में ज्ञान सिंहासन के नाम से प्रसिद्ध हैं। इन्हीं पाँच पीठों के द्वारा सम्पूर्ण भारतवर्ष में वीरशैव धर्म और तत्त्वज्ञान का प्रचार-प्रसार होता चला आया है।

एक विशेष बात यह है कि इन पाँच आचार्यों के अतिरिक्त कर्णाटक, महाराष्ट्र और आन्ध्र प्रदेश में इस धर्म के अनुयायी अनेक सन्त समय-समय पर हुए हैं, जिनका वीरशैव धर्म के प्रचार-प्रसार में महत्त्वपूर्ण योगदान रहा है। उनमें कर्णाटक के महात्मा बसवेश्वर, महाराष्ट्र के श्री मन्मथ स्वामी आदि प्रमुख हैं।

वैसे तो वीरशैव धर्म पूरे भारत में व्याप्त है, लेकिन लोकसंख्या की दृष्टि से कर्णाटक, महाराष्ट्र और आन्ध्र प्रदेश में इनकी संख्या अधिक है। वीरशैव धर्म का एक पर्याय नाम 'लिङ्गायत' है। लिङ्गायत शब्द वास्तविक दृष्टि से इस धर्म के उतना अनुरूप नहीं है, अतः वीरशैव शब्द ही अधिक शास्त्रीय माना जाता है। वीरशैव धर्म का मूल स्त्रोत आगमशास्त्र है, जिसे 'सिद्धान्तागम' अथवा 'शैवागम' कहते हैं। इनकी संख्या अट्ठाइस है–(१) कामिक, (२) योगज, (३) चिन्त्य, (४) कारण, (५) अजित, (६) दीप्त, (७) सूक्ष्म, (८) सहस्र, (९) अंशुमान्, (१०) सुप्रभेद, (११) विजय, (१२) निःश्वास, (१३) स्वायम्भुव, (१४) अनल, (१५) वीर, (१६) रौरव, (१७) मुकुट, (१८) विमल, (१९) चन्द्रज्ञान, (२०) बिम्ब, (२१) प्रोद्गीत, (२२) ललित, (२३) सिद्ध, (२४) सन्तान, (२५) शर्वोक्त, (२६) पारमेश्वर (जो प्रस्तुत निबन्ध का उपजीव्य है), (२७) किरण और (२८) वातुल।

प्रत्येक आगम में चार पाद हैं–(१) क्रियापाद, (२) चर्यापाद, (३) योगपाद और (४) ज्ञानपाद। इनके उत्तर भाग में वीरशैव सिद्धान्त का प्रतिपादन मिलता है। जैसा कि 'सिद्धान्तशिखामणि' में प्रतिपादित है—

**सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।**
**निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्[१]॥**

प्रस्तुत निबन्ध के शीर्षक में भस्म, रुद्राक्ष, लिङ्गधारण तथा दीक्षा ये चार पद हैं। इनके सम्बन्ध में वेदागमोपनिषत्पुराणादि में विस्तारपूर्वक विवेचन प्राप्त होता है। अतः यह विषय इतना व्यापक है कि इन पर अलग-अलग एक स्वतन्त्र ग्रन्थ की रचना हो सकती है, परन्तु यहाँ हमें 'पारमेश्वरागम' के सन्दर्भ में ही उक्त विषयों पर विचार करना है।

१. सि. शि., ५.१४।

## भस्मधारण

भस्मधारण के सम्बन्ध में हमारे सूत्रग्रन्थों, उपनिषदों, निबन्ध-ग्रन्थों, पुराणों आदि में बहुत सारा वर्णन प्राप्त होता है, परन्तु शैवागमों में जैसा वर्णन प्राप्त होता है, वैसा अन्यत्र दुर्लभ है। सिद्धान्तशिखोपनिषद् में भस्मधारण के सम्बन्ध में ऐसा प्रमाण मिलता है कि पहले वीरशैव व्रतधारी को शिवतीर्थ के मङ्गल जल में स्नान करना चाहिए, पश्चात् अपने समस्त शरीर को, उसके अङ्ग-प्रत्यङ्ग को भस्म का लेप लगाकर उसे पवित्र करते हुए त्रिपुण्ड्र धारण करना चाहिए। यथा—

**स्नानं कृत्वा शिवतीर्थेऽथ देहं सर्वं भस्मोद्धूलनात् पावयित्वा त्रिपुण्ड्रं धार्यम्[१] ।**

भस्मोद्धूलन का वर्णन इस प्रकार मिलता है—

**अग्निरित्यादिभिर्मन्त्रैः सद्योजातादिमन्त्रतः ।**
**सर्वाङ्गोद्धूलनं कुर्यादापादतलमस्तकम्[२] ।।**

**'सद्योजातं प्रपद्यामि'**[३] मन्त्र से प्रारम्भ कर 'अग्निः'[४] इत्यादि मन्त्रों द्वारा पैरों से लेकर मस्तक पर्यन्त शरीर के सभी अङ्ग-प्रत्यङ्गों में भस्म लेपन करना चाहिए। इसके अतिरिक्त भी सिद्धान्तशिखोपनिषद् में भस्म धारण के सम्बन्ध में विस्तारपूर्वक वर्णन प्राप्त होता है।

भस्म परिपक्वता एवं पूर्णता का द्योतक है। प्राचीन काल में जिस बर्तन में भोजन बनाया जाता था, उस बर्तन को भस्म लगाने की परम्परा थी, क्योंकि यह पूर्ण ब्रह्म है। अतः पूर्ण ब्रह्म को पात्र में रखने के पूर्व भस्म लगाकर उसे पवित्र कर लिया जाता था। यह चिह्न जिस प्रकार उस परम्परा से मिलता था, उसी तरह उस पात्र की, पवित्रता का मन पर असर होता था। उसी तरह भस्माङ्कित ललाट को देखकर मन में बड़ा आनन्द होता है और यह ज्ञात होता है कि यह अवश्य कोई शिवभक्त होगा।

---

१. सिद्धान्तशिखोपनिषत्, १६ (पृ. सं. ८५)।
२. सिद्धान्तशिखोपनिषत्, भाष्य में (पृ. सं. ८६)।
३. सद्योजातं प्रपद्यामि सद्योजाताय वै नमः।
भवे भवे नातिभवे भवस्यामं भवोद्भवाय नमः ।। (माना. उ. अउ. १५)
४. अग्निरिति भस्म। वायुरिति भस्म। जलमिति भस्म। स्थलमिति भस्म। व्योमेति भस्म। सर्वं हवा इदं भस्म। मन एतानि चक्षूंषि भस्मानि ।। (भस्मजाबालोपनिषत्, १.३)

भस्म, चन्दन, रुद्राक्ष ये सब धार्मिक आभूषण हैं। इसके अतिरिक्त अन्य आभूषण राजसिक होते हैं। सात्त्विक आभूषणों को धारण करने से सत्त्वगुण का प्रकर्ष होता है। सात्त्विक वृत्ति मन की शान्ति के लिए कारण है, उत्तम विचारों की पोषक होती है। सादगी से रहकर मन में उच्च विचारों का उत्कर्ष होना, इससे बढ़कर दूसरा कर्म नहीं है। पारमेश्वरागम में यह वर्णन है कि भस्म एक सात्त्विक आभूषण ही है। सात्त्विक आहार, सात्त्विक वेष और भस्मधारण ही शिवभक्तों का वैशिष्ट्य है।

भस्मस्नानोपरान्त भस्मोद्धूलन करके त्रिपुण्ड्र धारण करना चाहिए। भस्मधारण करते समय शुद्ध और नरम भस्म की जितनी मात्रा अपेक्षित है, उतनी ही एक पात्र में रखकर दूसरे पात्र से ढँक देना चाहिए, बाँये हाथ में उसमें से निकाल कर भस्म रखे और उसे दाहिने हाथ से ढँक दे। तब शैव पञ्चाक्षर मन्त्र का १०८ बार जप करे। तदनन्तर शुद्ध जल हाथ में लेकर उसे भी पूर्ववत् ढँक कर पञ्चाक्षर मन्त्र का जप करे। तब प्रणव सहित मूल मन्त्र का जप करते हुए उस भस्ममिश्रित जल का अपने सारे शरीर पर प्रोक्षण करे। इसे ही भस्मस्नान कहा जाता है। इसी तरह भवरूपी, रुद्र-रूपी, शर्वरूपी, उग्ररूपी, शम्भु को प्रणाम करता हूँ, विभूतिस्वरूप सिद्धरूप शिव को मैं बार-बार प्रणाम करता हूँ। इन मन्त्रों से जितनी अपेक्षा है, उतनी भस्म लेकर प्रत्येक अङ्ग में शिर से लेकर पैर तक उस भस्म को लगावे।

सबसे पहले प्रणव मन्त्र से शिर पर, पञ्चाक्षर मन्त्र से ललाट पर, सद्योजात मन्त्र से दोनों आँखों पर और वामदेव मन्त्र से दोनों कानों पर भस्म को लगाना चाहिए। अघोर मन्त्र से कण्ठ पर, तत्पुरुष मन्त्र से दोनों कन्धों पर, ईशान मन्त्र से वक्षस्थल पर और सभी पञ्चब्रह्म मन्त्रों का एक साथ उच्चारण करते हुए उदर और नाभि पर भस्म धारण करे। **'नमः शिवाय रुद्राय च'** मन्त्र से और **'नमो भवाय'** इस मन्त्र से जङ्घाओं पर तथा **'नम उग्राय'**, **'नमः कालाय'** इन दो मन्त्रों से पैर की पिण्डलियों पर भस्म लगाना चाहिए। **'नमः शिवाय, नमः शान्ताय'** इन दो मन्त्रों से पैरों के ऊपर भस्म लगावे और फिर इन्हीं सब मन्त्रों से पैरों के दसों अंगुलियों पर भस्म लेपन करना चाहिए। अग्नि इत्यादि दो मन्त्रों से दोनों एड़ियों के ऊपर की हड्डी की गाँठ पर भस्म लगावे। इसके पश्चात् दक्षिण बाहु, भुजा, कोहनी और मणिबन्ध पर इसी तरह बाम बाहु, भुजा, कोहनी पर और मणिबन्ध पर क्रमशः आगे पढ़े गये मन्त्रों से भस्म धारण करे, **ज्वालाय नमः, ज्वालालिङ्गाय नमः, आत्मने नमः, आत्मलिङ्गाय नमः, परमलिङ्गाय नमः, शिवाय नमः** इन मन्त्रों से ग्रीवा की रेखाओं पर, **'त्रिशूलिने नमः'** से पीठ पर और **'महादेवाय नमः'** से दोनों पसलियों पर भस्म

धारण करे। भ्रमर के समान नेत्रवाले शम्भु को मैं प्रणाम करता हूँ, इस मन्त्र का उच्चारण करते हुए दोनों काँखों में भस्म लगावे और प्रणव के साथ मूल मन्त्र का उच्चारण करते हुए पूरे शरीर पर भस्म लेपन करे[१]।

जो इस विधि से भस्म धारण करता है, वह शिव के समान सभी का पूज्य होता है। इस तरह भस्म धारण करने वाले की जो निन्दा करता है, वह प्रत्यक्ष शिव की निन्दा के समान ही है। प्रतिदिन नित्य नियम से वीरशैवों को भस्म धारण करना चाहिए। भस्मधारण-माहात्म्य के सम्बन्ध में मराठी के 'गुरुचरित्र'[२], शिवलीलामृत[३] इत्यादि ग्रन्थों में भी बड़े विस्तारपूर्वक वर्णन प्राप्त होता है, जिसका पूर्णरूप से यहाँ वर्णन करना अप्रासङ्गिक तो नहीं, परन्तु निबन्ध विस्तृत होता जायेगा। अत: उसका सन्दर्भ ही पर्याप्त है।

## रुद्राक्षधारण

रुद्राक्ष भगवान् शिव का आभूषण है। रुद्राक्ष की उत्पत्ति के बारे में बृहज्जाबालोपनिषत्, रुद्राक्षोपनिषत्, मराठी के गुरुचरित्र, शिवलीलामृत इत्यादि ग्रन्थों में विस्तारपूर्वक वर्णन प्राप्त होता है। रुद्राक्ष भगवान् शिव को अत्यन्त प्रिय है। जो रुद्राक्ष धारण करता है, वह प्रत्यक्ष शिवस्वरूप ही हो जाता है।

**भस्मोद्धूलितसर्वाङ्गा धृतरुद्राक्षमालिकाः।**
**ये भवन्ति महात्मानस्ते रुद्रा नात्र संशयः[४]।।**

जिसने सर्वाङ्ग पर भस्म लेपन किया है एवं गले में रुद्राक्ष की माला धारण की है, ऐसा महात्मा प्रत्यक्ष रुद्र ही है, इसमें सन्देह नहीं करना चाहिए। रुद्राक्ष आभूषण है। फिर भी स्वर्णाभूषणों की तरह केवल शरीर की सजावट के लिए उसे धारण नहीं किया जाता। उसमें प्रदर्शन नहीं होता। रुद्राक्ष धारण करने से मैं पैसे वाला हूँ, श्रेष्ठ हूँ, ऐसा अहङ्कार नहीं पनपता। उसके धारण से 'सब कुछ शिवमय है' ऐसा समभाव निर्मित होता है। इसलिए सभी आभूषणों में रुद्राक्ष सर्वश्रेष्ठ आभूषण है। इसका निर्माण भगवान् शिव के नेत्रों से हुआ है, ऐसा प्रमाण मिलता है। विशिष्ट वृक्ष के बीज को रुद्राक्ष कहते हैं। रुद्राक्ष उत्पत्ति के भेद से अड़तीस प्रकार के होते हैं। रुद्राक्ष एक मुख

१. पारमेश्वरागम, २५.४२।
२. गुरुचरित्र, मराठी, अं. २८-२९।
३. शिवलीलामृत, मराठी, अं. ११-१२।
४. सिद्धान्तशिखामणि, ७.६५।

से लेकर चौदह मुख तक होते हैं। जिनका मुख-भेद से शरीर के अवयवों पर धारण का अलग-अलग वीरशैव धर्म में प्रमाण मिलता है। इसके अतिरिक्त जो हर समय रुद्राक्ष धारण करता है, उसे पाप का स्पर्श नहीं होता और रुद्राक्षधारण करने से एक कोटि गोदान का फल मिलता है, ऐसा 'सिद्धान्तशिखामणि' में प्रमाण मिलता है—

**गवां कोटिप्रदानस्य यत्फलं भुवि लभ्यते।**
**तत्फलं लभते मर्त्यो नित्यं रुद्राक्षधारणात्[१]।।**

अर्थात् एक करोड़ गोदान से जो पुण्य प्राप्त होता है, उतना रुद्राक्ष धारण करने से मनुष्य को प्राप्त होता है। इसलिए रुद्राक्षधारण से उत्कृष्ट फल की प्राप्ति होती है। अत: शिवभक्त को कम से कम एक रुद्राक्ष अवश्य धारण करना चाहिए।

'चन्द्रज्ञानागम' में रुद्राक्षधारण के फल को बड़े विस्तृत ढंग से निरूपित किया गया है। जैसे– एकमुखी रुद्राक्ष धारण करने से साधक जितेन्द्रिय होता है, द्विमुखी धारण करने से अर्धनारीश्वर की कृपा का पात्र होता है, त्रिमुखी धारण करने से उस पर अग्निदेवता प्रसन्न होते हैं, चतुर्मुखी धारण करने से ब्रह्मदेव की, पञ्चमुखी धारण करने से भगवान् शिव की, षण्मुख को धारण करने से भगवान् कार्तिकेय की, सप्तमुखी रुद्राक्ष धारण करने से सप्तमातृकाओं की, अष्टमुखी धारण करने से अष्ट वसुओं की, नवमुखी धारण करने से दुर्गा जी की और दशमुख रुद्राक्ष धारण करने से यमराज की कृपा होती है। एकादशमुखी रुद्राक्ष धारण करने से इन्द्र आदि देवता सन्तुष्ट होकर सौभाग्य वृद्धि करते हैं। द्वादशमुखी रुद्राक्ष धारण करने से सूर्य की कृपा होती है, चतुर्दशमुखी रुद्राक्ष धारण करने से सारे रोग नष्ट होकर आरोग्य प्राप्ति होती है।

पारमेश्वरागम में भी रुद्राक्ष धारण के सम्बन्ध में यह प्रमाण मिलता है कि जिसने अपने शरीर पर भक्तिभावपूर्वक एक भी रुद्राक्ष धारण कर रखा है, उसको देखकर नाना प्रकार के पाप बहुत दूर चले जाते हैं। हे ईशानि ! जिस शिवभक्त के शरीर पर विभूति, रुद्राक्ष और इष्टलिङ्ग–ये तीनों विराजमान हैं, वह साक्षात् रुद्र ही है, नि:सन्देह वह मुझसे अभिन्न है। शिव जी कहते हैं कि मेरे इष्टलिङ्ग का पूजन, भस्म एवं रुद्राक्ष धारण तथा शिवपञ्चाक्षरी मन्त्र का जप–इनमें से प्रत्येक में शिव पद प्राप्ति का सामर्थ्य है। जिस भक्त में ये सभी साधन विद्यमान हों, उसके फल का वर्णन करना असम्भव है, उसे तो सब कुछ प्राप्त हो जाता है। साथ ही हे देवि ! जिसके ललाट पर भस्म का

---

१. सिद्धान्तशिखामणि, ७.६३।

त्रिपुण्ड्र है, शरीर पर रुद्राक्ष धारण किया है, जो शिवपञ्चाक्षरी मन्त्र का जप करता है और कण्ठ में जिसने इष्टलिङ्ग का आभूषण धारण कर रखा है, वह नि:सन्देह मेरा ही स्वरूप है[१]।

रुद्राक्ष की माला धारण करना आरोग्यदायक होने के कारण केवल वीरशैव ही नहीं, बल्कि सबको धारण करना चाहिए।

रुद्राक्ष धारण से रक्तचाप, हृदय विकार इत्यादि रोगों पर प्रतिबन्ध होता है, ऐसा आधुनिक वैज्ञानिकों ने भी खोज की है। इसलिए अब संसार में अधिक से अधिक संख्या में लोग रुद्राक्ष धारण कर रहे हैं। जाने-अनजाने में भी रुद्राक्ष धारण का फल प्राप्त होता है। रुद्राक्ष धारण करने से पाप का क्षय होकर पुण्य की प्राप्ति होती है, मस्तक पर रुद्राक्ष रखकर स्नान करने से गङ्गा स्नान का पुण्य मिलता है और रुद्राक्ष प्रक्षालित जल पीने से अकाल मृत्यु का भय दूर हो जाता है।

## लिङ्गधारण

पवित्र वीरशैव मत का मुख्य चिह्न लिङ्गधारण है। यह लिङ्गधारण का विषय ऋगादि वेदों में, ईशादि उपनिषदों में, कामिकादि आगमों में तथा व्यासोक्त पुराणों में बड़े ही विस्तृत रूप से प्राप्त होता है, यह कहने में कोई अतिशयोक्ति नहीं होगी। इसी विषय को सिद्धान्तशिखामणि में लिङ्गधारण प्रकरण में वीरशैवमतस्थापक श्रीजगद्गुरु रेणुकाचार्य ने अगस्त्य ऋषि को शिवसिद्धान्त का उपदेश करते समय निम्न प्रकार से कहा है—

**वेदशास्त्रपुराणेषु कामिकाद्यागमेषु च।**
**लिङ्गधारणमाख्यातं वीरशैवस्य निश्चयात्[२]॥**

उसी तरह ऋग्वेद में—

**पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि**
**पर्येषि विश्वतः। अतप्ततनुर्न तदामो अश्नुते[३]॥**

ऋग्वेद का यह मन्त्र लिङ्गधारण के सम्बन्ध में ही है। लिङ्गधारणचन्द्रिका में इसकी विस्तृत टीका प्राप्त होती है। यथा—

---

१. पारमेश्वरागम, ९३-९६।
२. सिद्धान्तशिखामणि, ६.५८।
३. ऋग्वेद, ९.८३.१।

"हे ब्रह्मणस्पते–लिङ्गरूपशरीरावच्छेदेन शरीरिभावेनाधिष्ठितपरमशिव, ते–तव, तद् ब्रह्मपदवाच्यलिङ्गरूपं शरीरं पवित्रमुक्तरीत्या शुच्यशुचिकालेऽपि धर्तुं योग्यम्, विततमिष्टादिभेदेन भक्तशरीरादिभेदेन वा बहुविधम्, प्रभुः निग्रहानुग्रहसमर्थस्त्वं, विश्वतः समस्तानि गात्राणि भक्तशरीराणि, पर्येषि-व्याप्नोषि, धार्यमाणस्सन् लिङ्गरूपशरीरद्वारा भक्ताङ्गसंयुक्तोऽसीत्यर्थः । अतप्ततनूस्तप्ता वेधा-मनु-क्रियादीक्षात्रयेण निर्दग्धपापपञ्जरा तनूर्यस्य सा न भवतीत्यतप्ततनूः, दीक्षात्रयरहितः, आमः अपरिपक्वान्तः सन्, तत् परशिवस्वरूपं नाश्नुते"[१] ॥ इति ।

इसी मन्त्र के अभिप्राय को महर्षि वेदव्यास ने लिङ्गपुराण में स्पष्ट एवं विस्तृत रूप से कहा है[२] । इस तरह से यह विषय क्रमशः यजुर्वेद, तैत्तिरीयारण्यक, वेदान्त-सारोपनिषद्, भक्तियोगोपनिषत्, निर्लेपोपनिषत्, चिदम्बरोपनिषत्, सिद्धान्तशिखोपनिषत्, लिङ्गधारणोपनिषत्, प्रसादजाबालोपनिषत्, वीरलैङ्गोपनिषत्, सूक्ष्मागम, वातुलागम, पारमेश्वरागम, वीरागम, शिवपुराण वायवीयसंहिता, शिवपुराण विद्येश्वरसंहिता, सनत्कुमारसंहिता, स्कन्दपुराण केदारखण्ड, स्कन्दपुराण अरुणाचलमाहात्म्यखण्ड, पद्मपुराण पातालखण्ड, शिवगीता, सौरपुराण, महाभारत अनुशासन पर्व इत्यादि में लिङ्गधारण का वर्णन प्राप्त होता है ।

'पारमेश्वरागम' में भगवान् शिव ने स्वयं पार्वती को यह बतलाया है कि देवि ! इष्टलिङ्ग धारण की महिमा से मनुष्य सुखपूर्वक दुःखसागर से पार हो जाता है । वहीं आगे यह भी मिलता है कि बिना दीक्षा के इष्टलिङ्ग को धारण नहीं करना चाहिए । अगर कोई अपने मन से धारण करता भी है, तो वह जीवित अवस्था में चाण्डाल बनकर मरणोपरान्त नरकगामी होता है । इसलिए जिसे इष्टलिङ्ग धारण करने की निष्ठा हो, वह शिवयोगी के पास जाकर उस गुरुरूप शिव की पूजा करे[३] ।

वहीं यह भी प्रमाण मिलता है कि बिना दीक्षा के लिङ्गधारण में दोष होता है, क्योंकि बिना विधि के कोई भी कार्य सफल नहीं होता । इसलिए इष्टलिङ्गधारण करने में दीक्षा ही मुख्य विधान है, जिसके अभाव में नाना प्रकार के दोषों का प्रादुर्भाव होता है[४] ।

'पारमेश्वरागम' के द्वितीय पटल में अन्यान्य विषयों के साथ लिङ्ग का लक्षण

१. लिङ्गधारणचन्द्रिका ।
२. लिङ्गपुराण, उत्तर भाग, अ. २१ ।
३. पारमेश्वरागम, ६९-७५ ।
४. पारमेश्वरागम, ७६-७७ ।

और भेद दिखलाया गया है, साथ ही उसके धारण का फल भी, जो अन्यत्र दुर्लभ है। जैसे–इस संसार की सभी चराचर वस्तुएँ शिवस्वरूप ही हैं। पाषाण, धातु आदि से जो बना है, उसे भी शिवलिङ्गस्वरूप ही जानना चाहिए।

नर्मदा आदि नदियों से उत्पन्न पुण्य क्षेत्र में प्रकट हुए गङ्गा और सागर में उत्पन्न ये सारे शिवस्वरूप ही हैं। इन सबमें मन्दिर में स्थापित शिवलिङ्ग ही सर्वश्रेष्ठ है तथा दीक्षाविधानपूर्वक गुरु के द्वारा प्रदत्त इष्टलिङ्ग की सर्वश्रेष्ठता स्थापित की है, वहीं साधकों को फल देने वाले काम्य लिङ्गों का वर्णन भी प्राप्त होता है। इनमें सुवर्ण, पारद इत्यादि से बने हुए लिङ्ग आकार में जितने बड़े होते हैं, तदनुसार ही वे बढ़कर फल देते हैं। उनमें पारद लिङ्ग सभी कामनाओं को पूरा करने वाला, सुवर्णनिर्मित लिङ्ग धन देने वाला, रजतलिङ्ग सन्तति देने वाला और ताम्र का बना लिङ्ग शत्रु का नाश करने वाला कहा गया है। उसी तरह जस्ते का बना लिङ्ग रोग का नाशक, सीसे का बना पापों का नाशक, स्फटिकलिङ्ग ज्ञान एवं पुण्यप्रद होता है तथा रुद्राक्ष का लिङ्ग मोक्षप्रद कहा गया है। काष्ठ निर्मित लिङ्ग सर्वनाश कर देता है। कांसे का लिङ्ग रोग और पीड़ा पहुँचाता है। श्रीशैल के पाषाण से निर्मित लिङ्ग ऐहिक और आमुष्मिक सभी सुखों को देता है। इसी तरह लिङ्ग के प्रमाणों के बारे में वर्णन प्राप्त होता है एवं सर्वत्र दीक्षा लिङ्ग की ही श्रेष्ठता बतलायी गयी है[१]।

## दीक्षा

सनातन काल से गुरुदीक्षा की रीति इस पवित्र भूमि में प्रचलित है। शास्त्रों में ऐसा प्रमाण मिलता है कि जैसे पाषाण पर बीज बोने से बीज अंकुरित नहीं होता, वैसे ही बिना गुरुदीक्षा के साधना करने से कभी भी आध्यात्मिक उन्नति नहीं हो सकती। थोड़ा सा विचार करने से शास्त्रोक्त इस महावाक्य का रहस्य ज्ञात हो सकता है। जब से शिशु में ज्ञान अंकुरित होता है, उसके अनन्तर जैसे-जैसे उसके ज्ञान की वृद्धि होती जाती है, वह वृद्धि औरों के उपदेश से ही होती है। अर्थात् जैसे-जैसे उस शिशु को उसके माता-पिता, प्रतिपालक और विद्या-गुरु-गण, उपदेश द्वारा जैसी-जैसी शिक्षा देते जाते हैं, वैसे ही उस बालक में ज्ञान की स्फूर्ति होती जाती है। अतः वे उपदेशकगण उस शिशु के शिक्षा-गुरु हैं; क्योंकि उन उपदेशों की सहायता के बिना उस बालक को किसी प्रकार से ज्ञान की प्राप्ति नहीं हो सकती थी। मन, बुद्धि और इन्द्रिय आदि जब तक किसी प्रबल शक्ति से उत्तेजित, आकृष्ट और चालित न किये जाँय, तब तक ये

१. पारमेश्वरागम, २.४-१६।

कोई काम नहीं कर सकते। अब जिस शक्ति के द्वारा हम लोग उन्नति की ओर घुमाए जाते हैं, वही शक्ति हमारे गुरु हैं। चन्द्र, सूर्य, ग्रह-नक्षत्रादि जिस महाशक्ति के इङ्गित मात्र से अपने कार्य पर लगे रहते हैं, वही जगत् की महाशक्ति जगद्गुरु है। जगद्गुरु के जानने के लिए जब जीव का मन व्याकुल होता है, उस व्याकुलता को दूर करके इस घोर मायामय अन्धकारपूर्ण संसार-पथ को जो तत्त्वज्ञानी महापुरुष उपदेशरूप दीपक द्वारा सुगम कर देते हैं, वे ही दीक्षा-गुरु हैं। अब विचार द्वारा यह प्रतिपन्न हुआ कि बिना दूसरे के उपदेश के जीव कुछ भी ज्ञान-लाभ नहीं कर सकता। चाहे वह सांसारिक ज्ञान हो, चाहे आध्यात्मिक ज्ञान, बिना गुरु-उपदेश के किसी प्रकार का ज्ञान-लाभ नहीं हो सकता।

शिक्षा के भेद से शास्त्र में दो प्रकार के गुरु लिखे गये हैं— शिक्षा-गुरु और दीक्षा-गुरु। माता-पिता आचार्यादि जो कोई सांसारिक ज्ञान की वृद्धि करने में सहायता करें, वे शिक्षा-गुरु हैं। अर्थात् एक कीट से लेकर समस्त ब्रह्माण्ड ही शिक्षा-गुरु हो सकता है। परन्तु दीक्षा-गुरु वे ही हो सकते हैं, जिन्होंने जीव की व्याकुलता देख कृपा कर आत्मोन्नति का मार्ग उसे दिखाया हो।

गुरुदीक्षा का वर्णन करते समय सनातन शास्त्रों ने आज्ञा दी है कि दीक्षा से पहले भी गुरुदेव शिष्य की कम से कम छः महीने अथवा एक साल तक परीक्षा कर लें एवं परस्पर में प्रीति तथा भक्ति होने पर यदि गुरुदेव शिष्य को उपयुक्त समझें, तो दीक्षा दान करें। यह भी प्राप्त होता है कि शास्त्रविधि से यदि शिष्य की दीक्षा होगी, तो अवश्य ही उस जिज्ञासु का कल्याण होगा, इसमें सन्देह नहीं। परन्तु शास्त्रों ने यह भी आज्ञा दी है कि श्री गुरुदेव की शक्ति का पार नहीं है। वे यदि इच्छा करें, तो अधिकारी चाहे जैसा हो, चाहे जैसा देश-काल पात्र हो, चाहे शिष्य की परीक्षा करें या न करें, वे सब समय में सब देश में दीक्षा द्वारा शिष्य का कल्याण कर सकते हैं। थोड़े अथवा बहुत परिमाण में प्रायः विश्व के सभी धर्मों में दीक्षा की परम्परा है।

गुरुगीता, मुण्डकोपनिषत्, श्वेताश्वतरोपनिषत्, श्रीमद्भगवद्गीता, पातञ्जल-योगदर्शन, श्रीमद्भागवत, रुद्रयामलतन्त्र, मनुसंहिता, तैत्तिरीयोपनिषद्, महाभारत, सिद्धान्तशिखामणि, पारमेश्वरागमादि अनेक स्थलों पर दीक्षा, गुरु-शिष्य-लक्षण इत्यादि के बारे में बड़े विस्तार से वर्णन प्राप्त होता है। विश्वाराध्य जगद्गुरु १००८ श्रीश्री डॉ. चन्द्रशेखर शिवाचार्य जी महाराज ने अपने 'जन्म हा अखेरचा' नामक मराठी ग्रन्थ में इसको इतने सरल ढंग से बतलाया है कि वह अवर्णनीय है। यह ग्रन्थ लौकिक भाषा का आध्यात्मिक कोष है, जिसमें सारे अध्यात्म-विषयों का समावेश है।

जिसे एक बार हाथ में उठाने पर बार-बार उसके पारायण का मन करता है। यही इस ग्रन्थ का वैशिष्ट्य है।

पारमेश्वरागम तृतीय पटल में दीक्षा-विधि का निरूपण प्राप्त होता है, जिसमें क्रमशः दीक्षाविधि में मण्डपनिर्माण, यजमान-कर्तव्य, कलशार्चन, दीक्षाक्रम, लिङ्गार्चन, पूजनोपयोगी पुष्प, सज्जिकागुण संस्कार एवं अन्त में लिङ्ग, विभूति, रुद्राक्ष धारण महिमा का वर्णन प्राप्त होता है। यहाँ स्वयं ईश्वर ने यह कहा है कि जो व्यक्ति इष्टलिङ्ग को धारण कर सदा विभूति धारण करता है एवं सदा रुद्राक्ष धारण करता है, वह शिवस्वरूप ही हो जाता है[१]। वहाँ स्त्री-शूद्र, जाति-पाँति का कोई भी भेद-भाव नहीं रह जाता है। उसी तरह सप्तदश पटल में भस्मनिर्माण विधि का विस्तारपूर्वक वर्णन प्राप्त होता है। तदनन्तर भस्मधारण-विधि दी हुई है, जो सर्वत्र एक ही समानं वर्णित है, साथ ही भस्म की महिमा का वर्णन है[२]।

बाईसवें पटल में भगवान् शिव ने पार्वती की समस्त शङ्काओं का निराकरण करते हुए यह समाधान प्रस्तुत किया है–हे देवि ! तुमने जो कुछ कहा है, वह ठीक ही है। इस विषय में जो महत्त्व की बात है, तुम उसे सुनो। इस संसार में अनेक मतभेद होते हुए भी सबकी यह विशेषता है कि सर्वत्र इष्टलिङ्ग धारण समान है। यज्ञादि कर्मों का आश्रयण करने वाले भले ही किसी इच्छा से इनका अनुष्ठान करें, उनको कर्म-बन्धन से मुक्ति दिलानेवाला इष्टलिङ्ग धारण ही मुख्य उपाय है। इष्टलिङ्ग धारण करना एक सशक्त तरणि का सहारा लेने के समान है, जिसके माध्यम से मनुष्य संसार-सागर को पार कर जायेगा। अन्य कर्मों की गति तो अति विचित्र है, जिसका पार पाना बड़ा ही दुर्गम है[३]।

पारमेश्वरागम के तेईसवें पटल में भी येन-केन प्रकारेण इष्टलिङ्ग के धारण की महिमा के साथ ही ग्रन्थ की समाप्ति होती है। यहाँ देवी ने ईश्वर से यह कहा है कि हे प्रभु ! बिना आपके इस संसार का निर्माण ही नहीं हो सकता, अतः यह सिद्ध ही है कि बिना ईश्वर के इस संसार का निर्माण असम्भव है। इससे अन्य नास्तिक दर्शन चार्वाक आदि का खण्डन स्वतः हो जाता है।

## उपसंहार

अन्त में निबन्ध का उपसंहार करते हुए यह कहा जा सकता है कि

१. पारमेश्वरागम, तृतीय पटल।

२. सप्तदश पटल।

३. द्वाविंश पटल।

"पारमेश्वरागम में भस्म, रुद्राक्ष एवं लिङ्गधारण दीक्षा" के सम्बन्ध में जो कुछ भी वर्णन प्राप्त है, ऐसा वर्णन अन्यत्र कहीं देखने को नहीं मिलता। हमने यथामति इसमें वीर-शैव इतिहास से लेकर सारा वर्णन यहाँ संक्षेप, सार रूप में, किया है। भस्म, लिङ्ग-रुद्राक्ष धारण, दीक्षा के विषय को देखने से ऐसा लगता है कि सम्पूर्ण विश्व को एक सूत्र में बाँधने के लिए शैवधर्म के अतिरिक्त कोई धर्म ही नहीं है, क्योंकि इस धर्म में शिवयोगी की दृष्टि समान रहती है। यहाँ ब्राह्मण, क्षत्रिय, वैश्य, शूद्र अथवा अन्य किसी भी जाति का व्यक्ति हो, इष्टलिङ्ग को धारण करने मात्र से निःसन्देह शिवस्वरूप हो जाता है। स्त्री, बालक, वृद्ध, लूले, कुबड़े, अन्धे, लंगड़े, पागल, बहरे, काने, कपटी, धूर्त, ठग, चोर, व्यभिचारी, वेश्या और चाण्डाल पर्यन्त सभी प्राणी इष्टलिङ्ग धारण करने से शिवस्वरूप हो जाते हैं। नमस्कार करने में, पूजा करने में इस धर्म में बालक अथवा वृद्ध का भेद नहीं किया जाता, विधवा, रजस्वला आदि सभी यहाँ वन्दनीय हैं। वीरशैव धर्म के प्रति जिसकी भक्ति है, वे सभी उसके अधिकारी हैं, यह एक अलौकिक बात यहाँ प्राप्त होती है, जो सबसे बड़ी मानव धर्म को एक सूत्र में पिरोने का काम करती है। रही बात भस्म और रुद्राक्ष धारण की, तो वह भी धार्मिक चिह्न के साथ-साथ वैज्ञानिक महत्त्व की चीजें हैं, जिनकी ओर सामान्यतया लोगों का ध्यान जाता ही नहीं है। जैसे–रुद्राक्ष से पड़नेवाला पवित्र स्पन्दन आस-पास के वातावरण को शुद्ध करता है, रुद्राक्ष के जल का रोज प्राशन करने से हृदयरोग नहीं होता। उसी तरह भस्म के धारण से शरीर का सन्धिस्थल, मस्तक, वक्षस्थल के दोनों भाग, पीठ इत्यादि पर नित्य भस्म का लेप करने से सन्धि में वातादि रोगों का प्रादुर्भाव नहीं होता तथा शरीर के तेज एवं ओज की रक्षा होती है। उसी तरह लिङ्गधारण से स्वयं शिव का सान्निध्य रहने के कारण प्राणी सभी प्रकार के भय से रहित होकर अन्त में मुक्त हो जाता है। महाराष्ट्र के किसी भक्त ने अपनी स्तुति में ठीक ही कहा है–

**शास्त्राभ्यास नको श्रुति पढु नको तीर्थासि जाऊँ नको**
**योगाभ्यास नको व्रते मख नको तीव्रे तपेंती नको।**
**काकोंचे भय मानसी धरु नको दुष्टासी शंका नको**
**ज्याचिया स्मरणे पतित तरति तो शंभु-सोडुं नको।।**

अर्थात् वेद-शास्त्र, तीर्थयात्रा, योगाभ्यास इत्यादि की कोई आवश्यकता नहीं है, दुष्टों से भयभीत भी नहीं होना चाहिए, काल का भी भय मन में नहीं होना चाहिए। केवल जिनके स्मरण मात्र से पतित तर जाते हैं, ऐसे शिव का स्मरण निरन्तर करना चाहिए।

●

# पारमेश्वरागमसारसर्वस्वम्

*डॉ. कमलेशझा:*

अथ पारमेश्वरागममधिकृय श्रीगुरुकृपया किमपि तत्सारसर्वस्वमावेदितुं प्रयत्यते।

अत्र मङ्गलाचरणे प्रकृतेः, चन्द्रादेः, गजचर्मादिः, नन्द्यादेः, कुमारगणेशयोः, जगदम्बायाश्च परमेश्वरसेवनतत्परत्वमाविष्कुर्वता एकस्याद्वयस्य विश्वरूपत्वं तदुत्तीर्णत्वं परमोपादेयत्वं च प्रतिपादयता तस्य माहेश्वर्यं प्रति प्रह्वीभावो व्यज्यते। तद्यथा—

**वन्दे गिरीन्द्रतनयाद्विरदाननाग्नि-**
**भूनन्दिभृङ्गिरिटिसेवितपादपद्मम्**
**पञ्चाननं फणिशशीभतरक्षुचर्म-**
**भूषं महेशमनिशं शिरसा गिरीशम्।।**

भगवान् शिवो गुरुमूर्त्तिः सन् जगदुपकारायानुग्रहं कुर्वन् मन्त्रमूर्तेः रहस्यात्मकतामभिलषन् सर्वोपकारिकामपि पञ्चार्णां मन्त्रतनुं सद्गुरूपदेशबोध्यामभिध्यायति—

**जविपूर्वं मरुत्पूर्वं स्मरपूर्वं समन्वितः।**
**पार्श्वमक्षिसमायुक्तं वरुणस्थं धनुः प्रिये।।**
**वह्निपूर्वं ततो देवि मन्त्रः साक्षान्मदात्मकः।**
**सर्वेषामपि शैवानां सर्वसाधारणो मनुः।।** (१.३५-३६)

श्रीगुरुलब्धमन्त्रदीक्षाप्रयतः शिवयोगी यत्रोल्लसति, तत्र कैलासं काशी शिवश्च प्रतिवसतीति स्वयमाह भगवान् शिवः—

**निमिषं निमिषार्धं वा यत्र स्युः शिवयोगिनः।**
**तत्कैलासं परं विद्धि तत्र काशी शिवोऽप्यहम्।।** (१.५३)

क्षेत्रेषु काशीव, तीर्थेषु मणिकर्णिकेव, सर्वमन्त्रेषु पञ्चाक्षरी मन्त्र इव शैवमतं सर्वोत्तमोत्तममाभाति—

**यथैव काशी क्षेत्राणां तीर्थेषु मणिकर्णिका।**
**मम पञ्चाक्षरीमन्त्रः सर्वमन्त्रेषु वै यथा।।** (१.८३)

**यथैव सर्वलोकेषु कैलासस्थानमावयोः ।**
**तथा शैवमतं देवि विद्धि सर्वोत्तमोत्तमम् ।।** (१.८४)

न वै शिवयोगी शिवादतिरिच्यते—

**ललाटे भस्मना पुण्ड्रं करे रुद्राक्षजापनम् ।**
**कण्ठे च लिङ्गाभरणं सोऽहं देवि न संशयः ।।** (३.९६)

"नमस्ते सप्तजिह्वाय नमस्ते रुद्रमूर्त्तये" इत्यादिना श्लोकपञ्चकेनाग्निप्रार्थनं विधेयमिति प्रतिपादयता शिवेन शिवाशिवतनयत्वमाविष्कृतमग्नौ । तद्यथा—

**इति सम्प्रार्थ्य कुण्डस्थमावयोस्तनयं शिवे ।**
**आवयोरेकरूपेण ध्यायेदग्निमतन्द्रितः ।।** (४.६०)

अथ पञ्चमे पटले लिङ्गस्तुतिमधिकृत्य नानाकल्याणगुणशालिनां शिवनाम्नां काचन पङ्क्तिः श्लोकनवकादारभ्य पञ्चदशश्लोकपर्यन्तं श्रीशिवेनोपदिष्टा । फलस्तुतौ तु शिवसायुज्यं पार्यन्तिकं फलमुपदिष्टम् ।

सर्वज्ञता, तृप्तिः, अनादिबोधः, स्वातन्त्र्यम्, नित्यमलुप्तशक्तिः, अनन्तशक्तिश्चेति महेश्वरस्य षडङ्गानि विलसन्तीति प्रसङ्गान्निगदितम्—

**सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।।**
(६.३३)

भक्तेर्वैशिष्ट्यं निगदता शिवेन तस्या मातेव रक्षकत्वम्, पितेव हितकारित्वम्, कामधेनुरिव कल्पवृक्ष इव च कामसवितृता, करस्थोऽमृतग्रास इव चानन्दप्रयोजकताऽऽविष्कृता—

**भक्तिर्माता पिता देवि कामधेनुः सुरद्रुमः ।**
**करस्थममृतग्रासं विद्धि भक्तिं कुलेश्वरि ।।** (६.४४)

किं बहुना, भ्रमरकीटन्यायेन शिवभजनवान् शिव एव भवति—

**यस्यास्ति निर्मला बुद्धिरधीशे मयि शङ्करे ।**
**स मामुपैति भ्रमरकीटन्यायेन सुन्दरि ।।** (६.५०)

"ज्ञानी त्वात्मैव मे मतम्" इति हि किल तदा प्रतिफलति यदा, सम्यग्ज्ञानी शिवस्यैव परं वपुश्चराचरात्मकमिदं विश्वमिति भावयति—

**चराचरात्मकं सर्वं भावयन् परमात्मनः ।**
**मम रूपं महेशानि सम्यग्ज्ञानी स उच्यते ।।** (६.५९)

याः किल षड् ऊर्मयः, तत्र क्षुत्पिपासे प्राणस्य धर्मौ, शोकमोहौ मनसो धर्मौ। जननं मरणं चेति देहस्य धर्मौ। कथमिवात्मा ताभिरूर्मिभिर्बाध्येत नाम, यो हि अरिषड्वर्गेण कामक्रोधादिना नो चेद् वञ्चितः सुज्ञातस्थलषट्कः।

**क्षुत्पिपासे महेशानि शोकमोहौ जनिर्मृतिः ।**
**संसाराब्ध्यूर्मयश्चैता यथाब्धावूर्मयस्तथा ।।** (६.६७)
**कामः क्रोधश्च लोभश्च मोहश्च मद एव हि ।**
**मात्सर्यञ्च क्रमेणैतद् वर्गषट्कमुदाहृतम् ।।** (६.६८)

अथ षष्ठे पटले ७७तमश्लोकादारभ्य १०३तमश्लोकपर्यन्तं साधनक्रमोल्लास-निरूपणपरा शिवस्तुतिः शिवमयीभावमापादयति शिवयोगिनः—

**वरदमृगकुठाराभीतिहस्ताम्बुजाय**
**स्फुटमुकुटविराजच्चन्द्रमःशेखराय ।**
**मृदुलविमलदूर्वाश्लिष्टभूभृत्सुताय**
**प्रणवमय नमः श्रीशङ्करायों नमस्ते ।।**
(६.१०३)

महाशैवः किल शयनासनादिकं शिवायार्पयन् शिवार्चनमयजीवनो विजयते—

**स स्वपेच्छयनादीनि पूजायै शङ्करेऽर्पयेत् ।**
**सर्वेन्द्रियनिवृत्तोऽपि शिवमेवार्चयेच्छिवे ।।** (६.२०)

शिवस्तुतिमयोऽयं शिवयोगी यदेतन्मैथुनमष्टाङ्गम्—

**स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।**
**सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।।** (८.१५)

तद्विदूरे स्थितो भक्तिमयो विभूतिभूषितः शिवोपासकः पञ्चाक्षरं जपन् स्वात्मानं शिवमेव स्तौति। यथोक्तमष्टमपटले ४६ तमश्लोकादारभ्य ५६ तमश्लोकपर्यन्तं "नमः शिवाय गुरवे गुरवे शिवरूपिणे" इत्येवं विशिष्टगुणक्रियानानात्वमाधृत्य विलक्षण-स्वातन्त्र्यमाधारीकृत्य च गुरुमूर्तिं शिवानुग्रहवपुषं निर्धारयता शिवेन शिवां प्रति।

परं सर्वमेतत्तदा भवति, यथा परशिवे आस्थावती निष्ठा तत्कृपयैव विजृम्भते—

**नैव रक्षन्ति विषया न भोगा न च बान्धवाः ।**
**नैव सम्पत्तिदारिद्र्ये निष्ठैका सति शङ्करे ।।** (९.६४)

एष शिवयोगी तु जगदम्बया उमया सहितं शिवं चन्द्रशेखरं मन्दस्मितं प्रसन्नवदनाम्भोजं ध्यायतितमाम्—

**मन्दस्मितं त्रिनयनमीशानं कृत्तिवाससम् ।**
**प्रसन्नवदनाम्भोजं सर्वालङ्कारशोभितम् ।।** (१०.३६)

शिवयोगध्यानमयः 'शिवोऽहम्' इत्येवं भावनाभरितो विषयवासनानिःस्पृहो भक्तिमान् धीरः 'वीरशैवः' इत्याख्यायते—

**योगध्यानद्वये भक्त्या योऽतीतः सर्वनिःस्पृहः ।**
**शिवोऽहं भावनाधीरो वीरशैव उदाहृतः ।।** (१०.५९)

एतस्य मुख्यं कर्म दया भवति । असौ पञ्चाक्षरीसाहाय्येन महेशं ध्यायन् रक्षापेक्षं जनमनुगृह्णाति—

**न पुष्पाहरणायासो न तद्द्वारान्यपीडनम् ।**
**भावेनैव परं कर्म दयैका वीरशैविनः ।।** (१० ७५)

**ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं**
**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।**
**पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं**
**विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ।।** (११.६५)

अन्तर्मुखं शिवं केन वा स्तोत्रेण केन वा कर्मणा असौ प्रसादयेत्, अथापि भक्तेषु वात्सल्यं पूजानुमोदनं तत्कथाश्रवणादिषु भक्तिश्चेति शिवयोगिनि अहमहमिकया विलसन्ति—

**शिवभक्तेषु वात्सल्यं पूजायां चानुमोदनम् ।**
**स्वयमभ्यर्चनं चैव तदर्थं चाङ्गचेष्टनम् ।।** (१२.२६)

एतस्य शिवयोगिनश्चतुष्पथः शिवधर्मो विभ्राजते—ज्ञानम्, क्रिया, चर्या, योगश्चेति । नासौ जातुचिदपि शिवाद् विमुखो भवति—

**अर्चयेदम्बिकानाथं सर्वाङ्गं सर्वहेतुना ।**
**मम धर्मरतो देवि श्रेयसे चेत्कृतोद्यमः ।।** (१२.५५)

अद्भुतं किल यदतेच्छिवनामस्मरणं नाम । नामस्मरणेनैव शिवयोगिनो दिवसा आयान्ति यान्ति च—

**शिवः शम्भुः शिवः शम्भुः शिवः शम्भुः शिवः शिवः।**
**इति व्याहरतो नित्यं दिनान्यायान्तु यान्तु मे।।**
(१२.८४-८५)

अथाहुः श्रीगुरवो महामहोपाध्याया आचार्यरामेश्वरझामहानुभावाः सम्पत्तिर्नाम श्रद्धा, या मातेव अनुपालयति, विद्वत्तादिकं को नाम गणयेत् शिवतामपि सहजतया प्रयच्छति—

**विहिता शास्त्रगुर्वादौ श्रद्धा मातेव पालिका।**
**यया विना न कस्यापि कोऽप्यर्थः सिध्यति क्वचित्।।**
(पूर्णताप्रत्यभिज्ञा, २९८)

**विद्वत्ता बहुविज्ञता सुकविता व्याख्यातृताऽऽचार्यता**
**सर्वैश्वर्यमनीहताऽपि शिवता ये सन्ति चान्ये गुणाः।**
**तान् मन्ये मनुते तृणाय च तृणं त्वत्पादरक्तोत्पला-**
**मोदास्वादनगाढमत्तहृदयो धन्योऽहमन्योऽपि यः।।**
(श्रीक्रमाभिज्ञापना, ३१)

सैषा श्रद्धैव शिवेनापि स्तूयते—

**यस्य श्रद्धास्ति देवेशि येन केनापि हेतुना।**
**तस्य वश्यो ह्यहं देवि योगिनां वीरशैविनाम्।।**
(१२.८७-८८)

एवंविधस्य शिवयोगिनो दशविशेषाः क्षमाप्रभृतयः स्वत एव समुल्लसन्ति—

**क्षमा शान्तिश्च सन्तोषः सत्यमस्तेयमेव च।**
**ब्रह्मचर्यं मम ज्ञानं वैराग्यं भस्मसेवनम्।।**
**सर्वसङ्गनिवृत्तिश्च दशैतानि विशेषतः।।** (१२.१०३, २९८)

शिवयोगिन उपास्यः शिवः सर्वदेवतीर्थमयजलधारया प्रीणितः सन् आराधकमहमर्थ-कतान्त्रयति—

**सर्वदेवात्मकं तोयं सर्वतीर्थमयं शुभम्।**
**तेनाभिषिच्य मां भक्त्या को वाहं न भवेच्छिवे।।** (१३.५२)
**सर्वभावमयभावमण्डलं विश्वशक्तिमयशक्तिबर्हिषि।**
**जुह्वतोऽस्ति मम कः समः परो विश्वमेधमययज्ञयाजिनः।।**

श्रीगुरोः कृपयैकाधिगम्ये करपङ्कजपीठे सर्वदेवमये सर्वक्षेत्रमये च मध्यधाम्नि काश्यां शिवपूजनस्य किमपि विलक्षणं माहात्म्यं वरीवर्त्ति।

**सर्वदेवमयं पीठं सर्वक्षेत्रमयं परम्।**
**करपङ्कजपीठस्य मध्ये काशी सदान्विता।।** (१३. ७३-७४)

शिवार्चने लिङ्गस्य सखण्डाखण्डभेदनिर्वचनम्, शिवपात्रे तीर्थावाहनम्, पात्राधार-वर्णनम्, दिङ्निर्देशः, गुरुदेवतयोरैक्यभावनं चात्रैव प्रतिपादितम्।

सर्वदशासु सर्वदोषविनाशकरं सर्वाभ्युदयसाधकं श्रीगुरोः स्मरणं तन्नामस्मरणञ्च स्मृतम्—

**मन्त्रमूलं गुरोर्वाक्यं पूजामूलं गुरोः पदम्।**
**ध्यानमूलं गुरोर्मूत्तिर्मोक्षमूलं गुरोः कृपा।।** (१४. ८७)

श्रीरुद्रस्तुतिरियं श्रीदेव्या विहितां किलावधार्यताम्—

**सृष्ट्वा तमेकमात्मानमनेकं कुरुते पुनः।**
**एकीकृत्य ग्रसति यस्तस्मै रुद्र नमोऽस्तु ते।।** (१५. १)

सामान्यवीरशैवम्, विशेषवीरशैवम्, निराभारवीरशैवं चेति वीरशैवमतं त्रिधा भिद्यते—

**सामान्यं वीरशैवं च विशेषं च ततः परम्।**
**निराभारं वीरशैवं न ततोऽधिकमीश्वरि।।** (१५. ३२)

अनन्तरं षड्विधं लिङ्गं भगवता श्रीशिवेन जगदम्बां प्रति प्रोक्तम्—स्थिरम्, चरम्, स्थिरचरम्, चरस्थिरम्, स्थिरस्थिरम्, चरचरं चेति—

**स्थिरं चरं स्थिरचरं चरस्थिरमथाम्बिके।**
**स्थिरस्थिरं चरचरं षड्विधं लिङ्गलक्षणम्।।** (१६. ९)

शैवप्रभेदाः पञ्च—शुद्धशैवम्, मिश्रशैवम्, मार्गशैवम्, वीरशैवम्, अवान्तरशैवञ्चेति-

**शुद्धशैवं मिश्रशैवं मार्गशैवं तृतीयकम्।**
**चतुर्थं वीरशैवं च पञ्चमोऽवान्तरस्तथा।।** (१७. ४)

तत्र विरक्तशैवानां दश गुणाः स्मर्यन्ते—क्षमा, शान्तिः, सन्तोषः, सत्यम्, अस्तेयः, ब्रह्मचर्यम्, शिवज्ञानम्, वैराग्यम्, भस्मसेवनम्, सर्वसङ्गनिवृत्तिश्चेति—

**क्षमा शान्तिश्च सन्तोषः सत्यमस्तेय एव च।**
**ब्रह्मचर्यं शिवज्ञानं वैराग्यं भस्मसेवनम्।**
**सर्वसङ्गनिवृत्तिश्च दशैतानि विशेषतः।।** (१७. ३२-३३)

भस्मधारणस्य रुद्राक्षधारणस्य च परमं महत्त्वमत्र वर्णितमस्ति। भक्तेर्मुख्यसाधनता शिवस्वरूपकैवल्यावाप्तये भगवता प्रतिपादिता—

**सर्वत्र भक्तिरेकैव भक्तानां मुख्यसाधनम्।**
**गुरौ मते च शास्त्रे च मत्कैवल्याप्तये शिवे।।** (१९. ६१)

एका सूक्तिरतीव निर्मला आभाति, यत्र सुकृतं वा भवेत्, दुष्कृतं वा भवेत्, चतुर्णां समभागिता भवति–कर्तुः, कारयितुः, प्रेरकस्य, अनुमोदकस्य च—

**सुकृते दुष्कृते चैव चत्वारः समभागिनः।**
**कर्त्ता कारयिता चैव प्रेरकश्चानुमोदकः।।** (१९. ६७)

अथ प्रलये वटपत्रशायिना कृष्णेन शिवं स्तुवता यो ज्ञानयोगस्वरूपविषयकः प्रश्नः पृष्ट आसीत् तस्यैवाधुना जगन्मङ्गलहेतवे जगदम्बया भगवता शिवेन चोत्तरं विहितम्—

**एवमेव पुरा देवि प्रलये दिनसंक्षये।**
**वटपत्रशयी कृष्णो वेधसा मामपृच्छत।।** (२१. १४)

तत्र शिवस्वरूपवर्णनप्रसङ्गे एकविंशे पटले एकोनविंशश्लोकादारभ्य त्रयश्चत्वारिंशत् श्लोकपर्यन्तं प्रतिश्लोकं चिच्छिक्तिभेदः समाश्रितः। तत्रत्य एकैकोऽपि श्लोको भगवतः शिवस्य विलक्षणं स्वरूपं पूर्णतया प्रतिपादितुं शक्तः। यथा—

**आदिमध्यान्तरहितादित्यवर्णं तमःपरम्।**
**सर्वं सन्निधिसंस्थानं सर्वसाक्षिणमीश्वरम्।।** (२१. १९)

योऽयं निर्विकल्पः, यश्च जगत्कारणभूतः, यो वा शिवः, या वा शक्तिः, सर्वमेतद् अहमर्थस्वरूपमेव विजृम्भते—

**अहमेव वरारोहे निर्विकल्पादिलक्षणः।**
**भवत्या मम शक्त्यैवं विक्रीडामि यथासुखम्।।** (२१. ४९)
**शिवोऽहं त्वमुमे शक्तिस्त्वमेवाहमहं त्वमु।**
**स्त्र्यात्मा त्वं वै पुमात्माहं शिवशक्त्यात्मकं जगत्।।** (२१. ५०)

रविचन्द्रवह्निनेत्रैस्त्रितयनेत्रां जगदम्बिकां बिम्बप्रतिबिम्बन्यायेनाध्यासप्रवृत्तिं सम्यक् प्रतिपादयति—

**आभासरूपिणो भोक्तुर्न मे साक्षाच्चिदात्मनः।**
**परिच्छिन्नत्वमायातमायातस्य विकारिता।।** (१९. ७८)

**निर्मले मुकुरे यद्वद् भान्ति भूमिजलादयः ।**
**अमिश्रास्तद्वदेकस्मिंश्चिन्मात्रे विश्ववृत्तयः[१] ।।**

तत्रोभयोरियान् भेदः—दर्पणोऽचेतनः, तस्य च स्वान्तःस्थितस्य प्रतिबिम्बितवस्तुनो बोधो नैव भवति, महेश्वरस्तु चेतनः परमसंविद्विमर्शशक्त्या सर्वं जानाति ।

**अन्तर्विभाति सकलं जगदात्मनीह**
**यद्वद् विचित्ररचना मुकुरान्तराले ।**
**बोधः पुनर्निजविमर्शनसारयुक्त्या**
**विश्वं परामृशति नो मुकुरस्तथावत्[२] ।।**

तत्र मुकुरायमाना चितिः शिवस्य पराख्या शक्तिरेव, तस्यामेव प्रतिबिम्बते जगत् । बिम्बभूतः शिवः प्रतिबिम्बश्च जीवः । स च शिवाभिन्नोऽपि भिन्न इव प्रतिभाति । सर्वभागेषु परतोऽसङ्गः शिवः कर्तृत्वकरणत्वादिहीनः साक्षिमात्रम् । जीवश्च कर्मफलभोक्ता भोगेष्वासक्तः कर्ता चेत्युच्यते । एवं नैकोपाधिको भेदो प्रतिबिम्बयोः । कर्तृत्वाद्युपाधिना प्रतिबिम्बो जीवः, निरुपाधिको बिम्बः शिवः ।

**त्वयि दर्पणभूतायां बुद्धौ जीवोऽहमीश्वरः ।**
**असङ्गः प्रतिबिम्बोऽस्मि न भोक्ता केवलः शिवः ।।**
**शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।**
**अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः[३] ।।**

चिदेव भगवती स्वच्छन्दस्वतन्त्ररूपा तत्तदनन्तजगदात्मना स्फुरति । यद्यपि कार्यकारणयोर्भेदः सर्वसिद्धान्तेष्वभिमतः, कार्यं हि कारणाद् भिन्नं भवति, तयोरेकत्वे कार्यकारणभावासम्भवः । कार्यात् पूर्वनियतवृत्तिः कारणमिति नियमोऽत्र नाभिमतः । चितेः स्फुरणं जगदुन्मेषः । उभयं यौगपद्येन सम्पाद्यते, नास्ति कश्चित् क्रमः ।

## चितेः प्रकाशः सर्वत्र

सर्वमपि प्रपञ्चजातं चिदात्मकमेव तन्त्रागमेषु प्रसिद्धम् । तथा च चिदात्मैव हि शिवोऽन्तःस्थितं प्रपञ्चजातं स्वेच्छया स्वभित्तौ स्वाधारे स्वस्मिन् स्वप्रकाशे च बहिः प्रकाशयति । बहिःप्रकाशनमत्रान्तरवस्थितस्य प्रकटीकरणम् । तत्र यथा योगी सङ्कल्पमात्रेणैव यत्किमपि वस्तु बहिराभासयति, स किमप्युपादानं नापेक्षते, तथैव चितिरपि विनोपादानेनैव अन्तःस्थितमर्थजातं बहिराभासयति–

---

१. तन्त्रालोके, ३.४ । २. ई. प्र. वि. वि., पृ. १६८ ।
३. पारमेश्वरागमे, २१.५१-५२ ।

**चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः ।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत् ।।**
**स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम् ।**
**अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते[१] ।।**

यथा कुम्भकारो मृत्तिकामादायैव घटनिर्माणे समर्थो भवति तथा नात्र व्यवस्था। बाह्याभासो महेश्वरकल्पनानां बहिः प्रक्षेपमात्रमेवास्ति। ये पदार्था महेश्वरस्य ज्ञानस्वरूपाः सन्ति, ते तस्येच्छया ज्ञेयरूपात्मनि बहिः प्रकटतां यान्ति। ते चाहंस्वरूपाः सन्ति। ते चेदमात्मनि विश्वस्वरूपे वा आविर्भवन्ति। जीवेभ्यश्च बाह्यरूपमाभासयन्ति। उक्तश्च पदार्थस्योदयक्रमः—

**यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते ।**
**क्रियाकरणसंयोगात् पदार्थस्योदयो भवेत्[२] ।।**

शिवस्वरूपा शक्तिरेव चितिः, तस्यां प्रतिबिम्बते सर्वम्। सा च न शिवाद् भिन्ना, शिवस्वरूपभूतत्वात्तद्रूपैव। न च बिम्बभूतशिवाद् भिन्नः प्रतिबिम्बभूतो जीवः, प्रतिबिम्बस्य बिम्बातिरिक्तसत्ताशून्यत्वात्। बिम्बभूतः शिव एव कर्तृत्वभोक्तृत्वाद्युपाधिना प्रतिबिम्बितचैतन्यो जीवः। अविद्याकल्पितो हि जीवेशयोर्भेदः, न तु वास्तविकः।

**पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ।**
**तदन्यकल्पना ज्ञानमज्ञानं प्रकृतेर्गुणः[३] ।।**

अन्तर्निहितपदार्थजातं बिन्द्वात्मना बिम्बीभूतं चिदात्मके शिवस्वरूपे भासते। तत्र शिवस्य हि चित्स्वरूपम्, तस्मिंश्चान्तर्भूता जडपदार्था बाह्यरूपेण प्रकाशन्ते, अतस्ते शिवस्य शरीरत्वमादधते। यश्च चैतन्यसहितः प्रतिभासः, स जीवः। तत्र चितिरेव शिवस्योभयरूपतां प्रकुर्वते। सैव सृष्टेः सहकारिकारणम्, तदात्मकमेव जगत् सर्वम्।

**शिवोऽहं त्वमुमे शक्तिस्त्वमेवाहमहं त्वमु ।**
**स्त्र्यात्मा त्वं वै पुमात्माहं शिवशक्त्यात्मकं जगत्[४] ।।**

शिवोऽद्वितीयः सर्वव्यापकः सर्वनियन्तेत्युच्यते। तस्यैव स्वरूपवैभवमविद्या, माया, शक्तिरित्यभिधीयते। स्वकीययैवेच्छाशक्त्या एकः सन्नप्यनेकरूपतामापद्यते। सर्वव्यापकत्वादेतद्विश्वं तस्य वपुः, तदन्तर्भूताश्चेतनांशविशिष्टत्वाज्जीवास्तदंशाः। अतो जडचेतनोभयात्मकं जगत् शिवतत्त्वरूपमेव, न तद्भिन्नं किञ्चित्।

---

१. स्पन्दप्रदीपिकायाम्, पृ. ११३।
२. स्पन्दप्रदीपिकायाम्, पृ. ९०।
३. पारमेश्वरागमे, २१.६६।
४. पारमेश्वरागमे, २१.५०।

सृष्ट्वा तमेकमात्मानमनेकं कुरुते पुनः ।
एकीकृत्य ग्रसति यस्तस्मै रुद्र नमोऽस्तु ते[१] ।।

### शिवाद्वैतविमर्शः

शक्तिः शिवस्वरूपैव तन्निर्मितजगत्तनुः ।
कर्तृत्वादिविशिष्टोऽसौ तदंशो जीव उच्यते ।।
अविद्यावशगो जीवस्तन्निवृत्तौ स्वयं शिवः ।
अतस्तयोर्न भेदोऽस्ति नांशिनोंऽशः पृथक् क्वचित् ।।

सर्वं हि शिवमयं न तद्भिन्नं क्वचित्। माया, अविद्या, शक्तिरिति नामभिर्लोके ख्याता जगत्सृष्टिस्थितिसंहारनिमित्तं मूलप्रकृतिः शिवस्वरूपैवास्ति। वस्तुतत्स्वरूपयोरभेदात् शिवाभिन्ना शक्तिः। प्रपञ्चस्तु शिवशरीरत्वेनोच्यते। शरीरशरीरिणोरभेदात्तदपि शिवाभिन्नमेव। औपाधिकभेदेन शिवतत्त्वस्यैव जीवपदेन व्यपदेशः। स च जीवस्तदंश एव अंशांशिनोरभेदात्तयोरभेद इत्युच्यते। यत् किमपि जगति प्रतीयते, तत्सर्वं शिवतत्त्वमेवास्ति। उक्तं च—

अहमेकः परानन्दः परमात्मा सदाशिवः ।
सृष्ट्वा मायामयीं शक्तिं तथाऽहं षड्विधोऽभवम् ।।

शिव एव सर्वत्रानेकशो भासते प्रतीयमानं सर्वं पदार्थजातं शिवाभिन्नमिति पक्षे शिवाद्वैतसिद्धान्तः। यन्मते शिवोऽपि शक्तिविशिष्टः, जीवश्च शक्तिविशिष्टः, तयोरद्वैतं यत्र स शक्तिविशिष्टाद्वैतसिद्धान्तः। सा शक्तिः शिवस्वरूपैवेति कृत्वा शिवाद्वैतमेव तत्।

।। इति शिवम् ।।

•

१. पारमेश्वरागमे, १५.१ ।

# सद्गुरु के लक्षण और उसकी महिमा

*प्रो. गङ्गाधर पण्डा*

## व्युत्पत्ति एवं निर्वचन

व्याकरण के नियम के अनुसार 'गृ' धातु से गृणाति 'गृ निगरणे' इस धातु से (गिरति/गिलति) 'उ' प्रत्यय करने पर गुरु शब्द की निष्पत्ति होती है। ज्ञान देना या उपदेश करने का अर्थ इससे द्योतित होता है, अतः गुरुशब्द का सामान्य अर्थ शिक्षक होता है। विभिन्न ग्रन्थों में गुरु शब्द का निर्वचन इस प्रकार है—

**गुणातीतं गुकारं च रूपातीतं रुकारकम्।**
**गुणातीतमरूपं च यो दद्यात् स गुरुः स्मृतः[१] ।।**

यहाँ गुरु शब्द मे स्थित 'गु' का अर्थ है प्राकृत सत्त्वादि गुणातीत एवं 'रु' का अर्थ है माया रूपरहित। इस प्रकार निर्गुण एवं निराकार परशिव चैतन्य का जो उपदेश दे सकता है, वह गुरु कहलाता है।

**गुशब्दस्त्वन्धकारः स्याद् रुशब्दस्तन्निरोधकः।**
**अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते[२] ।।**

इस पद्य के अनुसार 'गु' का अर्थ है अन्धकार एवं 'रु' का अर्थ है रोकने वाला। अतः गुरु का अर्थ है– वह शक्ति, जो अन्धकार को दूर कर सकती है।

**गुकारः प्रथमो वर्णो मायादिगुणभासकः।**
**रुकारो द्वितीयो ब्रह्म मायाभ्रान्तिविनाशकम्[३] ।।**

यहाँ गुरु शब्द का प्रथम तत्त्व 'गु' माया का उद्बोधक है और द्वितीय तत्त्व माया का विनाशक है।

इसी प्रकार आगमसार में एक महत्त्वपूर्ण निर्वचन उपलब्ध है—

---

१. सिद्धान्तशिखामणि, १५.४ ; २. अद्वयतारकोपनिषद् ।
३. गुरुगीता।

**गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः ।**
**उकारः शम्भुरित्युक्तस्त्रितयात्मा गुरुः स्मृतः ।।**
**गकारो ज्ञानसम्पत्त्यै रेफस्तत्त्वप्रकाशकः ।**
**उकाराच्छिवतादात्म्यं दद्यादिति गुरुः स्मृतः[१] ।।**

इस निरुक्ति के अनुसार गुरु शब्द में स्थित 'ग्' आध्यात्मिक सिद्धि का 'र्' पापों का दहन का एवं 'उ' शिव का प्रतिनिधित्व करता है ।

पारमेश्वरागम के अनुसार गुरु का लक्षण इस प्रकार है—

**सदाचाररतं शुद्धं शिवभक्तमलोलुपम् ।**
**यथार्थवादिनं शान्तं द्वेषासूयादिवर्जितम् ।।**
**विदिताखिलशास्त्रार्थमिङ्गितज्ञमनाकुलम् ।**
**अनर्थातुरमात्मज्ञमकामुकमवञ्चकम् ।।**
**वाग्मिनं शिवतत्त्वार्थबोधकं हृष्टमानसम् ।**
**एतादृशगुणोपेतमुपेयाद् गुरुमीश्वरम्[२] ।।**

अर्थात् गुरु सभी शुभ लक्षणों से सम्पन्न, सब कुछ जानने वाला और सभी का आदरपात्र होना चाहिए। सदाचार का पालन करने वाला, शुद्ध चित्तवृत्तिवाला, शिव का भक्त, अचपल, यथार्थ वक्ता, शान्त, द्वेष एवं मात्सर्यादि दोषों से रहित, समस्त अर्थों को जानने वाला, इशारे से सब कुछ समझने वाला, अव्याकुल, द्रव्यलोभ से मुक्त, आत्मज्ञान से सम्पन्न, शिवतत्त्व के ज्ञान से सम्पन्न और सदा प्रसन्नचित्त रहने वाला है। इन सब गुणों से सम्पन्न ईश्वरस्वरूप गुरु की शरण में जाना चाहिए।

इस प्रकार की ये सब उपर्युक्त निरुक्तियाँ गुरुतत्त्व के चमत्कारपूर्ण अर्थ को प्रकाशित करती हैं। वीरशैव सम्प्रदाय के श्री जगद्गुरु रेणुकाचार्य जी गुरु का लक्षण इस प्रकार बताते हैं—

**उपैति लोकविख्यातं लोभमोहविवर्जितम् ।**
**आत्मतत्त्वविचारज्ञं विमुक्तविषयभ्रमम् ।।**
**शिवसिद्धान्ततत्त्वज्ञं छिन्नसन्देहविभ्रमम् ।**
**सर्वतन्त्रप्रयोगज्ञं धार्मिकं सत्यवादिनम् ।।**
**कुलक्रमागताचारं कुमार्गाचारवर्जितम् ।**
**शिवध्यानपरं शान्तं शिवतत्त्वविवेकिनम् ।।**

---

१. आगमसार । २. पारमेश्वरागम, २.६४-६६ ।

**लिङ्गधारणसंयुक्तं लिङ्गपूजापरायणम् ।**
**लिङ्गाङ्गयोगतत्त्वज्ञं निरूढाद्वैतवासनम् ।।**
**लिङ्गाङ्गस्थलभेदज्ञं श्रीगुरुं शिववादिनम्[१] ।।**

यहाँ कुलक्रमागताचार शब्द के महत्त्व पर बल दिया गया है। इसके साथ साथ अन्य योग्यताओं का रखना गुरु के लिए आवश्यक धर्म है। इसीलिए सूक्ष्मागम में कहा गया है—

**पितृभ्रातृकलत्राणां पुत्रादीनां तथैव च ।**
**दीक्षाशिक्षाविधानार्थमेक एव गुरुर्भवेत् ।।**
**गुरवो यत्र बहवो भवन्त्यन्योन्यभेदतः ।**
**वीरशैवसदाचारस्तत्र नास्तीति निश्चयः[२] ।।** इति।

## गुरु के प्रकार

गुरु के विभिन्न धर्म एवं कार्य को लेकर आचार्यों ने इसके तीन भेद बताये हैं– दीक्षागुरु, शिक्षागुरु एवं ज्ञानगुरु।

### १. दीक्षागुरु

**दीयते परमं ज्ञानं क्षीयते पाशबन्धनम् ।**
**यया दीक्षेति सा तस्यां गुरुर्दीक्षागुरुः स्मृतः[३] ।।**

अर्थात् परम्परागत गुरु ऐसी दीक्षा प्रदान करता है, जिससे शिष्य को शिवज्ञान की प्राप्ति होती है एवं उसका समस्त मल व्यपगत हो जाता है। वीरशैव धर्म के अनुसार दीक्षा लेना अनिवार्य है। गुरु शिष्य में शक्तिपात करके इष्टलिङ्ग प्रदानपूर्वक पञ्चाक्षरी मन्त्र देता है। इसमें स्त्री एवं पुरुषों का समान अधिकार है। जन्म से अष्टम वर्ष में दीक्षा लेने को उत्तम, षोडश वर्ष में मध्यम एवं तदुर्ध्व को अधम दीक्षा मानी जाती है।

## दीक्षा

दीक्षा के बिना सभी धार्मिक क्रिया निष्फल है। जिस प्रकार हाथी सिंह को देखकर भाग जाता है, ठीक उसी तरह दीक्षाहीन व्यक्ति से शिव भाग जाते हैं।

---

१. सिद्धान्तशिखामणि, ६.२-७; २. सूक्ष्मागम।
३. सि. शि. १५.।

**यथा मृगपतिं दृष्ट्वा भीतो याति वने गजः ।**
**अदीक्षितोऽर्चयेल्लिङ्गं तथैवाहं महेश्वरि[१] ।।**

यह दीक्षा तीन प्रकार की है–वेधादीक्षा, क्रियादीक्षा एवं मन्त्रदीक्षा।

**१. वेधादीक्षा**

**गुरोरालोकमात्रेण हस्तमस्तकयोगतः ।**
**यः शिवत्वसमावेशो वेधादीक्षेति सा मता[२] ।।**

गुरु शिष्य के प्रति कृपापूर्ण दृष्टि रखकर हस्त से मस्तक का स्पर्श करते हैं। इससे शिष्य में शिवत्व का समावेश हो जाता है।

**२. मन्त्रदीक्षा**

**मान्त्री दीक्षेति सा प्रोक्ता मन्त्रमात्रोपदेशिनी ।**

गुरु शिष्य के कर्ण में 'शिव पञ्चाक्षर मन्त्र' को देता है। इससे शिव के मन्त्रमयस्वरूप का ज्ञान होता है। गुरु शिष्य के हृदय में प्रकाश रूप प्राण लिङ्ग का बोध कराते हैं।

**३. क्रियादीक्षा**

**कुण्डमण्डलिकोपेता क्रियादीक्षा क्रियोत्तरा[३] ।**

इस वचन के अनुसार मठ या मन्दिर में वीरशैव धर्म के अनुसार कलश की स्थापना करके पाँच आचार्यों का आवाहन किया जाता है एवं अभिषेक करके शरीर को शुद्ध किया जाता है। शरीर शुद्धि के बाद शिवलिङ्ग में शिवकलानियोजन द्वारा प्राणप्रतिष्ठा की जाती है। इसीलिए कहा गया है–

**प्राणवद् धारणीयं तत् प्राणलिङ्गमिदं तव ।**
**कदाचित् कुत्रचिद् वापि मा वियोजय देहतः[४] ।।**

**२. शिक्षागुरु**

**दीक्षागुरुरसौ शिक्षाहेतुः शिष्यस्य बोधकः ।**
**प्रश्नोत्तरप्रवक्ता च शिक्षागुरुरितीर्यते[५] ।।**

---

१. दीक्षा बोध।
२. सि. शि. ६.१३।
३. सि. शि. ६.१५।
४. सि. शि. ६.५.।
५. सि. शि. १५.१।

अत्यन्त सावधानीपूर्वक जो मन्त्रसाधना एवं प्राणलिङ्गानुसन्धान पद्धति को सिखाता है, उसे शिक्षागुरु कहते हैं।

३. **ज्ञानगुरु**

**उपदेष्टोपदेशानां संशयच्छेदकारकः ।**
**सम्यग्ज्ञानप्रदः साक्षादेष ज्ञानगुरुः स्मृतः[१] ।।**

जो गुरु अनेक युक्तियों के द्वारा शिष्य का संशय दूर कर जीवमुक्ति हेतु शिवाद्वैत ज्ञान प्रदान करता है, उसे ज्ञानगुरु कहते हैं।

## उपसंहार

सभी परामपराओं का अध्ययन करने पर यह ज्ञात है कि गुरु शब्द की अवधारणा अपने अपने सम्प्रदाय में एक रहस्यात्मक अर्थ को व्यक्त करती है। योग दर्शन के अनुसार गुरु साक्षात् ईश्वर है, तो अद्वैत परम्परा में गुरु परब्रह्म है। समस्त मतों के महत्त्व को प्रतिपादित करके गुरुगीता में गुरु को मोक्ष का मूल बताया गया है–

**ध्यानमूलं गुरोर्मूर्त्तिः पूजामूलं गुरोः पदम् ।**
**मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ।।**



१. सि. शि. १५.१ ।

श्रीगुरुभ्यो नमः

# पारमेश्वरागमे वर्णितं वीरशैवमतमाहात्म्यम्

*श्री जगद्गुरु अन्नदानीश्वरमहास्वामिनः*

चराचरजगतः सर्जनपालनसंहारसमर्थकात् परमेश्वराद् विनिर्गताऽष्टाविंशत्यागमाः। तेषु शिवागमा दशः रुद्रागमा अष्टादश। यथा हि कामज-योगज-चिन्त्य-मौकुट-अंशुमत्-दीप्त-कारण-अजित-सूक्ष्म-सहस्रा इत्येते पाशुपतमतसम्मता दश शैवागमाः[1]। 'कामज'स्थाने 'कामिक' इत्युपलभ्यते। 'मौकुट'स्थाने सुप्रभेदाख्यस्य नाम लभ्यते। अष्टादशागमा यथा–विजय-पारमेश्वर-निश्वास-प्रोद्गीत-मुखबिम्ब-बिन्दुसिद्धि-सन्तान-नारसिंह-चन्द्रकाश-भद्रसर्वात्मन्-स्वायम्भुव-विवास (विरस) रौरव-मुकुट-किरण-ललित-आग्नेय-सौरभेद-पराभयमित्येते।[2] इत्येषामागमानामुल्लेखः क्रियासारे कृतोऽस्ति। प्रथमतः कामिकागमस्य गणनां कृत्वा वातुलागमस्यान्तिमगणना क्रियते। 'चन्द्रकाश' इत्यागमश्चन्द्र-ज्ञानागम इति ज्ञायते। एतेष्वष्टाविंशत्यागमेषु पारमेश्वरागमो वीरशैवमतमाहात्म्यकथने प्रसिद्धो वर्तते। एष पुरातनश्च प्रतिभाति।

यथाऽऽगमेषु शैवमतप्रतिपादनं कृतम्, तथैव वीरशैवमतनिरूपणं निगदितम्। केषाञ्चिद् विमर्शकानामभिप्राय एतादृशो दृश्यते, यद् 'वीरशैवः' शैवमतस्य अङ्गमेव वर्तते, अपि च शैवस्य परिभेद इति। तदलीकं दृश्यते। यतः पारमेश्वरागमे एतादृशविमर्शकेभ्यः प्रत्युत्तरं विद्यते। अस्मिन्नागमे परमेश्वर एव वदति—

**वीरशैवं तथाऽनादिशैवमादिपदं ततः।**
**अनुशैवं महाशैवं योगशैवं तु षष्ठकम्॥**
**सप्तमं ज्ञानशैवाख्यं तत्र सर्वोत्तमोत्तमम्।**
**वीरशैवमितीशानि तदङ्गानीतराणि तु[3]॥**

---

१. शक्तिविशिष्टाद्वैततत्त्वत्रयविमर्शः, पृ. ३।
२. शिवागमसौरभकन्नड, पृ. २९।
३. पारमेश्वरागमे, १६-१७।

शिवप्रमाणेन वीरशैवमतमेवाऽनादिमतमिति ज्ञायते। परन्तु शैवमतमादिमतं कथ्यते। अनादिनाऽऽदिर्जायते। अतः वीरशैवः पुरातनः, स च बहुप्राचीनतां भजते स्म। वीरशैवः अनादिशैवः, आदिशैवः, अनुशैवः, महाशैवः, योगशैवः, ज्ञानशैवः इत्येते सप्तशैवाः। सप्तशैवेषु वीरशैव एव सर्वोत्तम इति कथितः शिवेन। इतराणि षट्शैवमतानि वीरशैवस्याऽङ्गानि दृश्यन्ते। अनेन प्रमाणेन वीरशैवमतस्य सर्वोत्तमत्वं ज्ञायते इदं मतं स्वतन्त्रमतमिति च प्रतिभाति।

पारमेश्वरागमे यद् षड्दर्शननिरूपणं कृतम्, तत्रापि वीरशैवदर्शनस्यैव प्रधानत्वं प्रतिपादितम्। यथा—

**तन्त्रं तु षड्विधं प्रोक्तं षड्दर्शनविभेदतः।**
**वीरशैवं वैष्णवं च शाक्तं सौरं विनायकम्॥**
**कापालमिति विज्ञेयं दर्शनानि षडेव हि।**
**तत्तत्तन्त्रोक्तमार्गेण तत्तत्कर्म समाचरेत्[१]॥**

अत्र षड्दर्शनविभागेन तन्त्रं षट्प्रकारं प्रोक्तम्–१. वीरशैवदर्शनम्, २. वैष्णवदर्शनम्, ३. शाक्तदर्शनम्, ४. सौरदर्शनम्, ५, विनायकदर्शनम्, ६. कापालदर्शनमिति। तत्तद्दर्शनोक्तमार्गेण तत्तदाचरणं समाचरेत्, न तु मिश्रयेत्। गाणपत्यादीनीतराणि मतानि सन्ति। तानि मतानि भवेयुः। तेषां प्रत्येकमाचरणं कर्तव्यम्। षड्दर्शनविचारेऽपि परमेश्वरो वीरशैवदर्शनं प्रथमत्वेन कथितवान्। अपि च—

"अत्रादौ वीरशैवाख्यं तन्त्राणामुत्तमोत्तमम्"[२] इति दिशा वीरशैवाख्यं मतं सकलतन्त्राणामुत्तमोत्तमं विद्यते। यतो हि कथ्यते परशिवेन

**तत्र वक्ष्ये शिवे वीरशैवं सर्वोत्तमोत्तमम्।**
**....................................॥**
**वीरशैवमतं सद्यो भोगमोक्षैकसाधनम्।**
**सर्वोत्तमं मम मतं यतः सर्वोत्तमोऽस्म्यहम्॥**
**न वीरशैवसदृशं मतमस्ति जगत्त्रये।**
**सर्वभोगप्रदं पुण्यं शिवसायुज्यदायकम्[३]॥**

शिवो वदति यद् वीरशैवस्य सर्वोत्तमत्वम्। वीरशैवमताचरणं यो भक्तः करोति।

---

१. पारमेश्वरागमे श्लोकाः २३-२४।
२. तत्रैव, श्लोकाः ३२।
३. तत्रैव, श्लोकाः ४०-४२।

तस्य भोगश्च मोक्षश्च सुलभः । इदं वीरशैवमतं यतः सर्वोत्तममिति पृच्छेत् चेत्, शिवः प्रतिपादयति–अहं सर्वेषां देवानामपि सर्वोत्तमोऽस्मि । स्वर्ग-मर्त्य-पाताललोकेषु वीरशैवसमानमन्यं मतं नास्ति । अस्मिन् वीरशैवमते सर्वभोगप्रदं पुण्यं विन्दति साधकः, अन्ते च शिवसायुज्यं लभते ।

कर्नाटकप्रदेशे प्रसिद्धः शि. शि. बसनाल इति विमर्शकः वीरशैवमतोत्पत्तिं प्रसारं च प्रतिपादयन् पारमेश्वरागमस्य द्वौ श्लोकावुल्लिख्य बसवाल्लमयोः स्तुतिं प्रदर्शयति; तौ श्लोकौ पारमेश्वरागमे कुत्रापि नैवोल्लिखितौ । बसवालमानां प्रसङ्गोऽपि तत्र नहि वर्तते । बसवाल्लमौ महानुभावौ वर्तेते । विमर्शकस्य एष अभिप्राये वर्तते; यो वीरशैवधर्मो द्वादशशताब्दानन्तरं उत्पन्न इति तदलीकम् । तस्य न कोऽपि आधारो विद्यते । विमर्शकेन प्रतिपादितौ श्लोकौ प्रक्षिप्तौ वर्तेते । अतो विमर्शका मुक्तमनसा आगमान् अवलोकयन्तु[1] ।

भारतीयदर्शनेषु जगन्मिथ्यात्वमेव कथितम् । सुभाषितकारेणोच्यते—

**अनित्यानि शरीराणि विभवो नैव शाश्वतः ।**
**नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः[2] ।।**

पूर्वपुण्यवशादेव चतुरशीतिलक्षजन्मनः परं मानुषं जन्म लभते । परन्तु शरीराण्यनित्यानि । पुण्यतमं मानवशरीरं सम्प्राप्य पुरुषे मानवजन्मसाफल्यं यदि न साधयेत्, तर्हि मनुष्यत्वेन किं प्रयोजनम् ? मानवजन्म लब्ध्वा वीरशैवमतमवश्यं स्वीकुर्यात् । अत एव मानवहिताय शिवादेशः कृतः—

**वीरशैवसदृशमन्यं मतं नैव विद्यते ।।** इति ।

वस्तुतो मानवशरीरं क्षणविध्वंसि । यौवनं कुसुमोपमम्, आयुष्यं जलबिन्दुलोलचपलम् । विभवो नैव शाश्वतः । अतः परमहार-निद्रा-भय-मैथुनेषु पशुपुरुषयोः सामान्यं जीवनम् । केवलं ज्ञानाधिक्येन, धर्माधिक्येन च मानवः श्रेष्ठो भवति । तथापि मानवाय मृत्युर्नित्यं सन्निहितो वर्तते । अतो ज्ञानसाधनभूतं धर्मसाधनभूतं च मानवं जन्म सम्प्राप्य परमात्मानं यो न जानाति, परमात्मरूपमिष्टलिङ्गं न धारयति, तस्य जन्म निरर्थकमेव भवति ।

अद्यतन-नवनागरिकजीवने धर्ममोक्षयोरभाव एव दृश्यते । केवलमर्थकामयोः प्राबल्यं ज्ञायते धर्मशून्यत्वाच्च मोक्षस्यावकाशः कुतोऽस्ति ? यदा धर्माभावेनार्थः सम्पाद्यते, सोऽर्थः स्वार्थाय भवति । स तु अधर्माय प्रभवति । यदा मानवजीवनेऽधर्मेण

---

१. वीरशैवद हुए, हागु बेलवणिगे, प्रो शि. शि. बसणना, धारवाड (कन्नडग्रन्थ)
२. सुभाषितरत्नभाण्डागारे

धनसम्पादनं भवति, तदा दुर्बुद्धिरेव वर्धते। जीवनाभ्युदयनिःश्रेयससिद्धिरूपो धर्म एव मानवाय मोक्षं प्रापयति।

मोक्षसाधनाय वीरशैवमतमेव सुलभं सुखदं च वर्तते। अत एवोक्तम्—

**अपि पापशतं कृत्वा ज्ञानतोऽज्ञानतोऽपि वा।**
**वीरशैवमतं प्राप्य शिव एव न संशयः[१] ।।**

पापशतानि कृत्वाऽपि वीरशैवमतस्वीकारं करोति यः, स निस्संशयं शिवरूपो भवति। अत्र शिवसंस्कार एव प्रधानम्। तदुक्तं पार्वत्यै परमेश्वरेण—

**मम यो धारयेल्लिङ्गं यथोक्तं गुरुणा शिवे।**
**चाण्डालस्पृष्टदोषोऽपि स्मरतो नश्यति क्षणात्[२] ।।**

शिवरूपमिष्टलिङ्गं गुरुणा संस्कारपूर्वकं दत्तं यो धारयति; तस्य सकलदोषाः शिवस्मरणमात्रेण क्षणादेव नश्यन्ति। भवसागरं तितीर्षुः पुरुषोऽवश्यं लिङ्गधारणं कुर्यात्। तदुक्तं मकुटागमे—

**तितीर्षुर्जन्मवाराशिं नानादुःखग्रहाकुलम् ।**
**वेदागमान्तविदितं शाम्भवव्रतमाचरेत् ।।**
**तनुत्रयगताऽनादिमलत्रयविशोधनाः ।**
**लिङ्गत्रयानुसन्धानविशोषितभवाब्धयः[३] ।।**

यो मानवोऽनेकप्रकारदुःखरूपिग्रहैर्व्याप्तं जनन-मरण-संसारसागरं तितीर्षुर्भवति, तेन वेदागमान्ते प्रतिपादितं शाम्भवव्रतमाचरणीयम्। शाम्भवव्रतमेव वीरशैवाचरणम्। अनेन शाम्भवव्रताचरणेन स्थूल-सूक्ष्म-कारणशरीरेष्वनादिकालेन पर्याप्ताणव-मायिक-कामिकमलत्रयाणां निवारणं सद्गुरुः त्रिविधदीक्षया कृत्वा, शिष्यस्य त्रिविधतनुष्विष्ट-प्राणभरणलिङ्गान् धारयति। एतेषां त्रिविधलिङ्गानामनुसन्धानेन भवाब्धिर्विशेषेण विशोषितो भवन्ति। अतो वीरशैवस्य पुनर्जन्म न भवति स लिङ्गानुसन्धानेन भवबन्धनान्मुक्तो भवति।

लिङ्गधारणप्रक्रियायां जातिभेदोऽपि न दृश्यते। वीरशैवस्तु न जातिवाचकः, परन्तु तत्त्ववाचको वर्तते। पारमेश्वरागमे एष विषयः स्पष्टं प्रतिपादितः—

---

१. पारमेश्वरागमे, १.४४।
२. तत्रैव, १.५४।
३. मकुटागमे, उत्तरभागे, १०-११।

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चान्यजातयः ।**
**लिङ्गधारणमात्रेण शिवा एव न संशयः ।।**
**स्त्रियो बालास्तथा वृद्धाः खञ्जाः कुब्जान्धपङ्गवः ।**
**उन्मत्ता बधिराः काणाः शठा धूर्ताश्च वञ्चकाः ।।**
**चौरा जारास्तथा वेश्या आचाण्डालान्तसम्भवाः ।**
**मल्लिङ्गधारणादेव मद्रूपा एव ते शिवे ।।**
**यस्यास्ति भक्तिरीशानि वीरशैवमताश्रये ।**
**भक्तिमात्रपवित्रा हि सर्व एवाधिकारिणः[1] ।।**

अत्रेष्टलिङ्गधारणं मुख्यमस्ति। ये ब्राह्मणाः, क्षत्रियाः, वैश्याः, शूद्राः चान्यजातयो भवेयुः, ते सर्वे इष्टलिङ्गधारणेन निस्संशयं शिवरूपिणो भवन्ति। अत्राऽवस्थाभेदोऽपि नास्ति। ये च स्त्रियो बाला वृद्धा स्युः, अपि चाङ्गविकलाः भवेयुः, ये च खञ्जाः, कुब्जाः, अन्धाः, पङ्गवः–ते सर्वेऽपि लिङ्गधारणमात्रेण शिवस्वरूपिणो जायन्ते। एवं चोन्मत्ताः, बधिराः, काणाः, शठाः, धूर्ताः, वञ्चकाश्चोराः, जाराः, वेश्याः, आचाण्डालपर्यन्ता ये जनाः वर्तन्ते, ते लिङ्गधारणेन त्रिमलशून्यत्वाच्च शिवरूपिणो भवन्ति। अत एव वीरशैवमतं श्रेष्ठतमं विद्यते। येषां मानवानां वीरशैवधर्माश्रये भक्तिरस्ति, ते सर्वे वीरशैवधर्मस्याधिकारिणो भवन्ति। यतो हि भक्तिमात्रेण ते पवित्रा जायन्ते।

सर्वज्ञं सर्वेशं शङ्करं पृच्छति पार्वती–हे सकलोत्तम। वीरशैवमते वीरपूर्वत्वे किं प्रमाणम्? इहोच्यताम्। तदा ईश्वरः प्रत्युवाच—

**वीरत्वं नाम विश्वेशि तुरीया यत्र तत्र वै ।**
**गुरूक्तमार्गनिरता मते वीरपदाभिधे ।।**
**सर्वेऽपि वीरा देवेशि तुरीयास्तत्र तत्र ये ।**
**किन्तु मे शैवभेदो यो वीरशैवः स उच्यते[2] ।।**

हे विश्वेश्वरि! तुरीयावस्थायां स्थितो योगिः 'वीर' नाम्ना कथ्यते। वीरशैवमते नु, ते वीराः कथ्यन्ते। ये गुरूक्तमार्गे निरताः साधकाः। हे देवेशि चतुर्थावस्थायामनुष्ठीयमानाः सर्वे ते वीरा भवन्ति, किन्तु 'वीरशब्दः' वीरशैवमत एव रूढो भवेत्। अतः परं शिवो लिङ्गधारणमाहात्म्यं भणति—

---

१. पा. आ. ५८-६०, ६२।
२. तत्रैव, श्लोकः ६६।

**अत्र वक्ष्ये विशेषं ते लिङ्गधारणवैभवात् ।**
**भक्तिमात्रेण कल्याणि ! सुखं दुःखाम्बुधिं तरेत् ।।**

हे कल्याणि ! वीरशैवमतस्य विशेषताऽधिका वर्तते । तत्ते वक्ष्यामि यदिदमिष्टलिङ्गधारणमहत्त्वमेव विद्यते । इष्टलिङ्गे भक्तिं कृत्वा सुखदुःखसागरस्य पारं तरति । बिना शिवानुग्रहेण शिवभक्तिर्नैव सम्पद्यते । शिवसंस्कारविहीनस्य पुनर्जन्माऽपि न नश्यति । अत एव शिवेनाऽऽदेशः प्रदत्तः–

**न प्रकाशय कुत्रापि विना भक्तं सुलक्षणम्**[1] । भक्तिविहीनाय वीरशैवमतमाहात्म्यं तत्त्वं च न प्रकाशयेत् । सुलक्षणयुक्तभक्तायैव कथ्यताम् ।

लिङ्गधारी भक्तः सदा शुचिर्भवति, लिङ्गं त्वनिष्टपरिहारकमस्ति । लिङ्गधारणेन कस्यचित् मानवस्याऽशुचिर्नैव लिप्यते । अत एव भणितम्—

**रतावशुद्धावुद्योगे रणे निद्रादिषु प्रिये ।**
**कर्मणा मनसा वाचा जाग्रत्स्वप्नसुषुप्तिषु ।**
**न लिङ्गमुत्सृजेत् क्वापि प्राणैः कण्ठगतैरपि ।।**
**न पूजापि परित्याज्या कृच्छ्रेऽपि कुलनायिके ।**
**धारयेदात्मतादात्म्यं प्राणलिङ्गं ममेति तत्**[2] **।।**

सदा लिङ्गधारणेनापवित्रता नैवागच्छति । सम्भोगसमये, अपवित्रकर्मणि, शुद्धभूमौ, निद्राकालेऽपि कर्मणा, मनसा, वाचा जाग्रत्स्वप्नसुषुप्त्यवस्थास्विष्टलिङ्गं नैवोत्सृजेत् । प्राणापायसमयेऽपि लिङ्गं धारयेत्, यतः इष्टलिङ्गं प्राणलिङ्गमेव वर्तते । अतोऽवधानेन, आत्मतादात्म्यभावेन लिङ्गं धारयेत्, सदा प्रपूजयेच्च ।

वीरशैवस्य पर्यायनामानि बहूनि सन्ति । आगमेषु वीरशैवस्य शिरोव्रती, शाम्भवव्रती, अत्याश्रयीत्यादिनामानि कथितानि । शरणसिद्धान्ते लिङ्गवन्तः लिङ्गायतः, लिङ्गशरीरी, मन्त्रशरीरी, अप्राकृतशरीरी, प्रसादकायः, प्रकाशकायः, व्योमकायः, सर्वाङ्गलिङ्गी, वीरशैव इत्यादिनामान्यन्वर्थकानि दृश्यन्ते । वीरशैवपदमप्यर्थपूर्णं विद्यते । वीरशैवपदस्य निर्वचनं सैद्धान्तिकमेव वर्तते । तदुक्तं सिद्धान्तशिखामणौ भगवता रेणुकाचार्येण—

**वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।**
**तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः**[3] **।।**

---

१. पा. आ. श्लोक ८७ ।

२. पा. आ. २.१९-२०-२२ ।

३. सिद्धान्तशिखामणिः, ५.१५ ।

'वीर'शब्देनास्य मतस्य दार्शनिकसिद्धान्तः, सम्प्रदायाचारश्च प्रकटो भवति। वीरशैवसिद्धान्ते शिवदीक्षासम्पन्नस्य साधकस्य शरीरे इष्टलिङ्गधारणं सदा कर्तव्यम्। प्रमादेनापि कदाचिदिष्टलिङ्गं शरीराद् न त्यजेत्। एतल्लिङ्गं प्राणवद्धारणीयम्। यत इदं प्राणलिङ्गं वर्तते। 'वी'पदेनास्य मतस्य दार्शनिकसिद्धान्तभूता शिवजीवयोरैक्यविद्या बोध्यते। 'र'कारेण तस्यां विद्यायां यो रममाणः स वीरशैवः प्रभवति। अयमेव शिवयोगः। शिवयोग एव एतन्मतस्य सिद्धान्तः। शङ्करसंहितायां वीरशैवपदपरिभाषा स्पष्टतयोक्ता—

**यो हस्तपीठे निजलिङ्गमिष्टं**
**विन्यस्य तल्लीनमनःप्रचारः।**
**बाह्यक्रियासङ्कुलनिस्पृहात्मा**
**सम्पूजयत्यङ्ग स वीरशैवः[1]॥**

यो भक्तः स्वीयवामहस्ते गुरुणा संस्कारपूर्वकं प्रदत्तमिष्टलिङ्गं विन्यस्य तल्लिङ्गे दृष्टिं संस्थाप्य लिङ्गध्यानपरायणमनो भवति, एवं च बाह्यक्रियासमूहे तस्येच्छा निर्गता विद्यते, स लिङ्गलीनमनाः शिवयोगसाधनवानेव स्यात्। एतादृशप्रक्रियावानेव वीरशैवनामको भवति। लिङ्गाङ्गसामरस्यमुखेन शिवयोगं साधयन् स वीरशैवः कथ्यते। स भक्तः सत्यं 'वीर'पदस्य अन्वर्थकं नाम धारयति भोग्येयमायिदेवो विशेषार्थप्रकाशिकायां वीरशैवशब्दस्य व्याख्यानमित्थं करोति–

**वीरशैवनिरुक्तिर्या द्वयमेवाधुनोच्यते।**
**वीशब्दोऽत्र विकल्पार्थो रशब्दो रहितार्थकः।**
**विकल्परहितं शैवं वीरशैवमिति स्मृतम्[2]॥**

अत्र द्विविधरीत्या वीरशैवपदस्य निरुक्तिः कथिता, 'वीर'पदस्य 'वी' 'र' अक्षरयोः विशेषार्थः प्रदर्शितः। द्वयोरर्थो न तु यथार्थः, किन्तु कृत्रिमार्थ इति ज्ञायत इति सन्देहे पुनर्मायिदेवः कथयति—

**एकमेवाद्वितीयं यदविकल्पं परं पदम्।**
**तद्वीरशैवमित्युक्तं नेतरत् सविकल्पकम्[3]॥**

एषोऽर्थो युक्तियुक्तः। परब्रह्म 'एकमेवाद्वितीयम्।'' अतस्तदविकल्पकम्। विकल्परहितः

---

१. शङ्करसंहितोक्तिः।

२. विशेषार्थप्रकाशिका, २.३०-३१।

३. तत्रैव।

शैव एव वीरशैवः कथ्यते। ब्रह्मपदवाच्यमिष्टलिङ्गमप्येकेश्वरत्वस्य चिह्नम्। इतरशैवमतं सविकल्पकं ज्ञायते। इष्टलिङ्गं मणिकल्पं परं च वर्तते। लिङ्गाचारेऽन्यदेव कल्पनापि परित्यज्यत एव।

वीरशैवमते लिङ्गधारकाः सदा पवित्रा एव विद्यन्ते। यतस्ते त्रिमलरहितत्वात् सूतकनाशत्वाच्च शुद्धा भवन्ति। अत एवोक्तम्—

**धृतलिङ्गशरीरत्वात् सदा तु ज्ञानसम्भवात्।**
**शुचिरेव सदा तस्य नाशुद्धिर्नैव चाशुचिः[1]॥**

इष्टलिङ्गधारिणः शरीरं सदा पवित्रमेव विद्यते। तस्या शुद्धिरशुचित्वं वा नैव लिप्यते। संस्कारकारणात् ज्ञानसम्भवेन सत्क्रियासम्पन्नत्वेन च लिङ्गधारी पवित्रो विद्यते। लिङ्गधारिणोऽन्यमतस्य धर्मस्तस्य धर्मो न भवति। वीरशैवोऽधर्मैः, पाषण्डैः, दुर्वृत्तैः, विषयलोलुपैः, धूर्तैः, गुरुभक्तिविहीनैः सह सङ्गं नैव करोति।[2] सत्सङ्गे शरणजनसम्पर्के वसन् स्वीयाचरणे निरतो भवति। तथा च लब्धदीक्षः शिष्यः सदा लिङ्गपूजां करोति। त्रिकाललिङ्गपूजा प्रशस्ता वर्तते। सैव परमेश्वरेण भणिता–

**समबुद्धिर्भवेदात्मगुरुलिङ्गशिवेषु च।**
**त्रिकालमर्चयेल्लिङ्गं न्यायार्जितधनादिभिः।**
**द्विकालमेककालं वा सर्वदा लिङ्गमर्चयेत्[3]॥**

वीरशैवः समबुद्धिमान् भूत्वा आत्मोद्धारकगुरौ च लिङ्गे च शिवे च तारतम्यं नैव कुर्यात्। नित्यमुद्योगं कृत्वा न्यायेन सम्पादितधनादिभिर्लिङ्गं त्रिकालमर्चयेत्। त्रिकाललिङ्गार्चनाऽभावे द्विकालमेककालं वाऽभ्यर्चयेत्। लिङ्गार्चनेनैव शरीरशुद्धिर्मनःशुद्धिर्भावशुद्धिश्च जायते। स्वस्थो वीरशैवः लिङ्गपूजां कदापि न सन्त्यजेत्। लिङ्गपूजने न कोऽपि जातिभेदो विद्यते। तदेव कथितम्—

**न स्त्रीभेदो न पुंभेदो जातिवर्णाश्रमादिकम्।**
**सर्वातीतमिदं विद्धि वीरशैवमतं मम[4]॥**

वीरशैवमते तु स्त्रीभेदः, पुंभेदोऽपि नास्ति। जातिवर्णाऽऽश्रमादिकमतिक्रम्य वीरशैवो वर्तते। अत एव परमेश्वरो निगदति पार्वत्यै–"मम वीरशैवमतं सर्वातीतं

---

१. पा. आ. २. २७-२८। २. तत्रैव ३.६३-६६।
३. तत्रैव ५.३६-३७। ४. तत्रैव ५.४१।

विद्धि''। लिङ्गार्चनासक्तेषु वीरशैवेषु भेदभावोऽपि नैव विद्यते। लिङ्गधारणमाध्यमेन सर्वे समाना भवन्ति, परस्परं गौरवं च धारयन्ति।

**अभिवन्देत् तदान्योन्यं न भेदो लिङ्गधारिणाम्।**
**न ब्रह्मचर्यनियमो न वानप्रस्थलक्षणम्।**
**न संन्यासो न वैराग्यं यदि लिङ्गार्चने रतिः[१]।।**

लिङ्गधारी अन्यलिङ्गधारिणं दृष्ट्वाऽभिवादयेत्। तत्र ब्रह्मचर्यवानप्रस्थादिभेदोऽपि नैव विद्यते। लिङ्गार्चने संन्यासवैराग्यभेदोऽपि नास्ति। आबालवृद्धा वीरशैवाः समानशीला भवन्ति।

**दीक्षितो वीरशैवायां दीक्षायां धृतलिङ्गकः।**
**न नीचमाचरेत् कर्म नायासं नापि कुत्सितम्[२]।।**

वीरशैवदीक्षासम्पन्नो धृतलिङ्गको नीचं कर्म कदापि नैव कुर्यात्, कुत्सितमायसकरं कर्माऽपि सन्त्यजेत् शिवपूजाकार्ये च जिपुणत्वं मा कुर्यात्। अष्टविधार्चनमेव कुर्यात्।

**तिलाक्षतैर्बिल्वदलैर्नित्यपूजां समाचरेत्[३]।।**

नित्यलिङ्गपूजने जलं तिलमिश्रितानक्षतान्, बिल्वदलानि, पुष्पाणि, धूप-दीप-नैवेद्य-ताम्बूलादीनि समर्पयेत्। पूजासमये विनयभक्तिभावेन समर्पणभावेन च लिङ्गं प्रपूजयेत्। अनेकेषु एकत्वभावनात्, ज्ञानकर्मसमन्वयात् वीरशैवमतं श्रेष्ठतममिति शिवेन प्रमाणीकृतम्—

**यथापवर्गः प्राप्येषु तथा वीरशैवमतं मम।**
**तत्र सप्तविधानां तु वीरशैवमनुत्तमम्।।**
**वीरशैवमतं तत्र विशेषेण समाश्रयेत्।**
**इति ते कथितं देवि वीरशैवमतोत्तमम्[४]।।**

प्राप्तवस्तुषु यथापवर्गः (मोक्षः) श्रेष्ठो वर्तते, तथैव सर्वमतेषु शैवमतमधिकं दृश्यते। सप्तशैवेषु वीरशैवमतं अनुत्तमम्; अर्थात् श्रेष्ठतमम्, सर्वोत्तममिति पञ्चमपटलान्ते परमेश्वरः पार्वत्यै बोधितवान्–हे देवि ! सर्वश्रेष्ठ-वीरशैवमतस्य स्वरूपं तुभ्यं कथितम्। तथा च तस्याचरणनिरूपणमपि प्रतिपादितमिति।

---

१. पा. आ., ५.४१-४२। २. तत्रैव, ५.६७-६८।
३. तत्रैव, ५.८१। ४. तत्रैव, ५.१०५-१०७।

वीरशैवमतमाहात्म्ये तत्त्वत्रयस्य परिज्ञानमावश्यकं भवति। वीरशैवस्याऽष्टावरणमेवाऽङ्गानि भवेयुः, पञ्चाचाराः प्राणाः स्युः, षट्स्थलमात्मा स्यात्। एतत्तत्त्वत्रयस्य परिज्ञानेन नित्याचरणेन च वीरशैवस्य माहात्म्यमवगम्यते। अतः पारमेश्वरागमे षष्ठपटले षट्स्थलस्वरूपनिरूपणं कृतम्, सप्तमपटले षट् शैवनिरूपणानन्तरमष्टावरणप्रतिपादनं जातम्। पञ्चाचारा वीरशैवस्य ध्येयभूता विद्यन्ते। अष्टावरणसम्पन्नः पञ्चाचारपरायणः सन् षट्स्थलमात्मप्रत्ययत्वेन आचरणीयं स्यात्–गुरुलिङ्गं जङ्गमश्च पादतीर्थं प्रसादकम्।

**देहे विभूतिरुद्राक्षौ मम पञ्चाक्षरी मनुः॥**
**अष्टावरणसंयुक्ता वीरमाहेश्वरा नराः।**
**मम रूपधरा देवि विचरन्ति महीतले[१]॥**

गुरुः, लिङ्गम्, जङ्गमः, पादोदकः, प्रसादः, विभूतिः, रुद्राक्षः, मन्त्रः–इत्येतान्यष्टावरणानि सन्ति। अष्टावरणसंयुक्तो वीरशैवः शिवरूपधारी भूत्वा महीतले विचरन्तीति शिवेन प्रतिपादितम्। अष्टावरणे प्रथमा गुरुकृपा, गुरुकृपया इष्टलिङ्गप्राप्तिः, इष्टलिङ्गाराधनं जङ्गमसन्तृप्त्या सफलं भवति जीवनम्। जङ्गमाराधनेन पादोदकप्रसादप्राप्तिर्भवति। विभूतिरुद्राक्षमन्त्राः पूजासाधनभूता विद्यन्ते। पञ्चाचाराः प्राणा भवन्ति। अष्टावरणसम्पन्ने पञ्चाचारपरायणेन षट्स्थलात्मनः साक्षात्कारो लभ्यन्ते। परमेश्वरः कथयति–"तन्मन्थनोत्थितं सारं वीरशैवं परं शिवे"[२] इति।

सकलशैवमतानां मन्थनेनोत्थितं सारभूतमेव वीरशैवमतम्। परमेशं पृच्छति पार्वती माता–हे करुणासिन्धो! "वद मे षट्स्थलज्ञानलक्षणं तत्फलं विभो"[३] इति। तदा परमेश्वरः प्रतिवदति–

**शृणु देवि प्रवक्ष्यामि स्थलषट्कस्य लक्षणम्।**
**यज्ज्ञात्वा जायते सद्यः शिव एव न संशयः॥**
**गोपनीयं प्रयत्नेन दरिद्राणां यथा निधिः।**
**शिवभक्तिविहीनाय दुराचाररताय च।**
**नास्तिकाय न दुष्टाय वक्तव्यः षट्स्थलक्रमः[४]॥**

हे देवि! षट्स्थलस्वरूपलक्षणं प्रवक्ष्यामि, तत्सर्वं शृणु। षट्स्थललक्षणं ज्ञात्वा सद्यः शिव एव भवति, तत्र संशयो नास्ति। दरिद्राणां कृते निधिर्गोपनीयो वर्तते, तद्वत्

१. पा. आ., ७.५४-५५। २. तत्रैव, ७.९०।
३. तत्रैव, ६.१। ४. तत्रैव, ६.२-४।

षट्स्थलं प्रयत्नेन गोप्यं कुर्यात्। षट्स्थलतत्त्वं शिवभक्तिविहीनाय दुराचारे रताय नास्तिकाय दुष्टमनुष्याय च कदापि न वक्तव्यम्। यतः शिवभक्तिविहीनो मानवस्तत्त्वेष्वास्तिक्यभावं नहि करोति। वीरशैवमते श्रद्धाभाव एव प्रमुखः।

स्थलं नाम परमात्मा सच्चिदानन्दरूपः। तदेवोक्तमस्मिन् आगमे—

**अहमेव जगत्स्रष्टा पुनर्मय्येव लीयते।**
**अहमेव स्थलं विद्धि षड्विधं मम रूपकम्।।**
**भक्तो माहेश्वरश्चैव प्रसादी प्राणलिङ्गकः।**
**शरणः शिवलिङ्गैक्यः स्थलषट्कं मम प्रियम्[१]।।**

शिवः कथयति–अहमेव जगत्स्रष्टा। इदं जगत् पुनर्मय्येव लीयते। सर्जनलयकर्तृत्वेन स्थलं नाम जायते। स्थलं तु षड्विधं भवति। भक्तः, माहेश्वरः, प्रसादी, प्राणलिङ्गी, शरणः, ऐक्यः–इत्येते षट्स्थलपदवाच्या भवन्ति। अत्र भक्तादिस्थलत्रयं पूज्यपूजकभावेन वर्तते। षट्स्थलात्मकपूजाविधानेन साधकः शिवरूपो भवति। प्राणलिङ्गिस्थले तु शिवाद्वैतभाव एव निष्पद्यते। अत एवोक्तम्—

**यः प्राणलिङ्गलिङ्गी स्यात् स रुद्रो नात्र संशयः।**
**प्राणलिङ्गिस्थलमिदं मम चातिप्रियं शिवे[२]।।**

यः प्राणलिङ्गी भवति, सः निस्संशयं रुद्रो भवति। इदं प्राणलिङ्गिस्थलं शिवायाऽतिप्रियं जायते। एवमेव शरणस्थलमपि भवति—

**शरणत्वाधिकारी यः स देहान्ते शिवो भवेत्।**
**शरणाख्यस्थलमिदं मम चातिप्रियं शिवे।।**
**व्योमतत्त्वमिदं देवि तनुरन्यतमा मम[३]।।**

यः शरणः, स देहान्ते शिवरूप एव भवति। यत एतत् शरणस्थलमपि शिवस्य प्रियतरं विद्यते। शरणस्थले तु तस्य तनुर्व्योमकायो जायते। शरणो व्योमाङ्गो वर्तते। वीरशैवस्य महिमाऽपारतरा विद्यते। द्वादशाब्दीयोऽल्लमप्रभुदेवे व्योमकायसिद्धिं लब्धवान्।

षट्स्थलसाधनेन बहवो लाभा भवन्ति। साधकजीवने आचारविचारसमन्वयो

---

१. पा. आ., ६.७-८।
२. तत्रैव, ६.२९।
३. तत्रैव, ६.२४-२५।

लभ्यते साधनेन जन्मसंसारबन्धनान्मुच्यते। शिवस्य षट्शक्तयो षट्स्थलसाधके समाविष्टा भवन्ति। षट्स्थलसाधने भक्तिः प्रवर्धते। कर्मक्षयो भवति। सुबुद्धिर्जायते। पूज्यशङ्कराचार्येण कथितम्—

"भक्तिः किं न करोत्यहो वनचरो भक्तावतंसायते"[1] इति। भक्त्या वनचरो बेडरकण्णप्पाख्यः भक्तश्रेष्ठोऽभवत्। भक्तिप्रभावेणैव दुर्वासनानुबन्धीनि कर्माणि क्षीयन्ते। कर्मबन्धेषु नष्टेषु बुद्धिः स्वच्छा भवति, पवित्रा जायते। सन्त्यक्तविषया बुद्धिः परमात्मचिन्तने संलग्ना जायते। यस्य निर्मला बुद्धिर्भवति, तेन शिवयोगो लभ्यते। तदेवोक्तम्—

**यस्यास्ति निर्मला बुद्धिरधीशे मयि शङ्करे।**
**स मामुपैति भ्रमरकीटन्यायेन सुन्दरि[2]॥**

यस्य निर्मला बुद्धिः, स भ्रमरकीटन्यायवत् शिवरूपो भवति। एवं च शरणस्य हृदये गुरूक्तवाक्यार्थचिन्तनं भवति। तेन हिताऽहितविवेको जायते। स सकलं शुभाशुभं जानाति। एतादृशविचारवति शरणे ईश्वरस्वरूपज्ञानं सञ्जायते। शिवज्ञानेन दर्पसंक्षयो भवति। स सम्यग् ज्ञानी, शिव एव भवति।

अष्टमपटले वीरशैवलक्षणाचारनिरूपणे प्रथमं वीरशैवपदस्थ'वीर'शब्दस्य व्याख्या प्रतिपादिता। यथा—

**वीरत्वं नाम देवेशि यथा वीरो रणे भटः।**
**तथा मते च सद्भक्त्या वीरो वैराग्यतो दृढात्॥**
**एषणात्रयनिर्मुक्ता ज्ञानविज्ञानतत्पराः।**
**दृढवैराग्यसम्पन्ना वीरास्ते शिवयोगिनः[3]॥**

ईश्वरः पार्वत्यै प्रतिवदति। हे देवेशि! यथा रणरङ्गे भटो वीरो भवति, तथा वीरशैवमते सद्भक्त्या वैराग्यतो दृढवीरो भवति। एवञ्च पुत्रैषणावित्तैषणालोकैषणाभिर्विनिर्मुक्तो ज्ञानविज्ञानेषु तत्पराः शिवयोगिनो वीरा भवन्ति। ये वीरशैवाः परनारीरूपदर्शने अन्धाः, परदोषानुवादने मूका वर्तन्ते, सर्वज्ञा अपि बाला इव विद्यन्ते, परकान्तासु षण्डाः, अन्यपीडने पङ्गवः, विषयरसास्वादने अजिह्वा भवन्ति, त एव वीराः कथ्यन्ते। ये चामानिनः, अदम्भिनः, अहिंसावादिनः, आर्जवान्विताः, गुरुलिङ्गजङ्गमभक्तिपरायणाः,

---

१. शिवानन्दलहरी।

२. पा. आ. ६.५०।

३. तत्रैव, ८.७.८।

सर्वत्र समचित्ताः, विशुद्धभक्ताः, एकान्तवासिनो ध्यानरता भवन्ति, त एव निजवीरशैवाः, त एव वीराः सम्पद्यन्ते। वीरशैवव्रतस्थो भक्तः शिवपूजां विना अन्यत् कार्यं न करोति, किञ्चित् न खादति, शिवध्यानं शिवस्मरणं शिवकीर्तनं विना दैनन्दिनकार्यं न करोति। आचारविचारैरेव वीरशैवमाहात्म्यं व्यक्तं वर्तते। अयमेव नियताचारोऽस्ति।

**नित्यं प्रातश्च सायं च पूजा नित्यैकदा शिवे।**
**अशक्तश्चासहायश्च यथेच्छं पूजयेत् सदा।**
**शक्तोऽपि यो न कुरुते रौरवे नरके वसेत्[1] ।।**

लिङ्गधारी भक्तो नित्यं त्रिकालमभ्यर्चयेत्, प्रातः सायमपि पूजां कुर्यात्। अशक्तोऽसहायकोऽपि नित्यैकदा लिङ्गपूजां कुर्यात्। शक्तोऽपि वीरशैवः लिङ्गपूजां न करोति, चेत्, स रौरवे नरके वसेद् इति शिवाज्ञा विद्यते। नित्याचारविचारेणैव वीरशैवः सर्वेषु प्राणिषु श्रेष्ठतमो भवति। यथा हि—

**भूतानां प्राणिनः श्रेष्ठाः बुद्धिमन्तस्ततोऽधिकाः।**
**ततस्ततोऽपि च बृहद् बृहदाकृतयो जनाः ।।**
**सर्वोत्तमा हि मनुजास्तत्र विप्रा महोत्तमाः।**
**वेदिनः कर्मकर्तारस्तदर्थज्ञा विशेषतः ।।**
**ततो वेदान्तसारज्ञास्ततः संन्यासिनः परे।**
**ततः पाशुपताः श्रेष्ठा लिङ्गिनस्तु ततोऽधिकाः ।।**
**ततोऽधिका महाश्रेष्ठा वीरमाहेश्वराः शिवे।**
**न तेभ्यो ह्यधिकः कश्चिद् वीरशैवाश्रयात् परः ।।**
**तावन्महिमसम्पन्नो वीरशैवः परः शिवः[2] ।।**

सर्वेषु मानवेषु लिङ्गधारिण एव श्रेष्ठाः, तत्रापि वीरमाहेश्वरा महाश्रेष्ठाः। तेभ्यस्तु न कोऽप्यधिक इति प्रतिपाद्यते। "वीरशैवः परः शिवः" इत्येत्कथनाद् वीरशैवस्य माहात्म्यं ज्ञायते। अपि च—

**वीरशैवमतस्थस्य मुक्तिः करस्थले स्थिता।**[3] वीरशैवमतस्याऽऽचाराननुसरतो भक्तस्य करस्थले मुक्तिः प्रत्यक्षेति शिवेनैव प्रतिपादनाद् वीरशैवमाहात्म्यं स्पष्टं दर्शितमेव।

पारमेश्वरागमे नवमपटले प्रत्येकं वीरशैवमतमाहात्म्यनिरूपणं कृतम्। यथा

१. पा. आ., ८.६५-६६।
२. तत्रैव, ८.६६-७३।
३. तत्रैव, ८.७८।

काश्यां मरणान्मुक्तिर्लभ्यत इति श्रद्धा वर्तते, तथैव वीरशैवमते प्रवेशमात्रेण शिवो भवति। यद्वत् क्षुधितस्यापि तृप्तस्य वा शर्करा मधुरा भवति, तद्वद् ज्ञानिनोऽज्ञानिनो वा वीरशैवमतं सुखप्रदमेव विद्यते[१]। यदि वीरशैवमतं प्रविश्य यः कश्चिदाचारहीनो जायते, स प्रायश्चित्ती नूनं भविता। तत् कथितं शिवेन—

**वीरशैवमतं प्राप्य यो बुद्ध्या विषयातुरः।**
**श्वानयोनिशतं गत्वा चाण्डालो भुवि जायते॥**
**वीरशैवमतं प्राप्य यः कुर्यात् प्राणिहिंसनम्।**
**कर्मणा मनसा वाचा स वसेद् रौरवे चिरम्॥**
**भोगार्थं सङ्ग्रहं मद्यं मांसं स्त्रीं च कलञ्जनम्।**
**स कोटिजन्मसु श्वा वै चाण्डालो भुवि जायते[२]॥**

आचारनिष्ठो वीरशैवः; अनाचारेण तु वीरशैवत्वं न लभ्यते। आचारहीना वीरशैवा अपि रौरवे नरके गच्छन्ति। तदुक्तम्—

**यः पश्यत्यन्धवद्रूपं शब्दवद् बधिरोपमः।**
**काष्ठवद् दृष्टदेहो यो वीरशैवः स उच्यते॥**
**न बुद्ध्या चिन्तयेदर्थं वीरशैवव्रते सकृत्।**
**न प्राणिपीडनपरो वीरशैवः स उच्यते।**
**मर्म विज्ञाय शास्त्रस्य यो बुद्ध्या विषयातुरः॥**
**तस्य नास्त्येव नास्त्येव मत्पदप्राप्तिरीश्वरि[३]॥**

वीरशैवमतस्थः साधक आचारे दृढमनस्को भवति, सुन्दरस्त्रीरूपं दृष्ट्वाप्यन्धवत् तिष्ठति। शब्दज्ञानविदपि बधिरोपमो भवति। यो काष्ठवत् स्वीयशरीरं पश्यति, स एव वीरशैवो भविता। वीरशैवव्रतस्वीकारानन्तरमर्थचिन्तां परित्यजेत्। (कायक) नित्योद्योगशीलतयाऽर्थचिन्ता न भवति। वीरशैवः प्राणिपीडनम्, हिंसादिकं कर्म कदापि न कुर्यात्। शास्त्राणां रहस्यं ज्ञात्वापि यदि विषयासक्तो भवेद्यदि स वीरशैवो न भवति। तस्य शिवपदप्राप्तिर्नैव भविता। यदिदं सत्यं वचः। कदापि बलात्काराद्वा वीरशैवमते न प्रवेशो वर्तते। अलिङ्गिना सह सम्पर्कं मा कुर्यात्। यत आचारभेदात् विचारभेदाच्च सम्बन्धो नैव युज्यते। वीरशैवमते तु कायक्लेशादिकमुपवासादिव्रतादावुपोषणमपि न कर्तव्यम्। वीरशैवमते सहजाचारविचारसमन्वयात्, क्रियाज्ञानसमुच्चयाच्च तन्मतवैशिष्ट्यं पूर्णं वर्तते। तदेवोक्तम्—

---

१. पा. आ., ९.१२-१३।
२. तत्रैव, ९.२३-२७।
३. तत्रैव, ९.२८-३२।

**तत्र सर्वोन्नतं वीरशैवव्रतमनुत्तमम्[१] ।।**

अत्र वीरशैवव्रतमेव सर्वोन्नतं प्रतिपादितं वर्तते। एवं च—

**दैवोपलब्धसुखभुक् शिवपूजापरायणः ।**
**वीरशैवपदं प्राप्य सुखेनोपैति निर्वृतिम्[२] ।।**

देवकृपया प्राप्तं लिङ्गभोगोपभोगरूपं वीरशैवसाधनरूपं शिवपूजादिकं लब्ध्वा वीरशैवो निर्वृतिं (मोक्षं) प्राप्नोतीति शिवेन प्रतिपादितम्।

वीरशैवमतं पुण्यैकलभ्यं वर्तते। पुण्येन विनेदं मतं नैव प्राप्यते। अत एव कथितम्—

**करस्थिते ज्वलद्दीपे वीरशैवाभिधे सति ।**
**कुमार्गेण व्रजेद् यस्तु सोऽन्धो निर्गतलोचनः ।।**
**वीरशैवमतं स्वच्छवज्रनावमधिष्ठितः ।**
**सुखं तरेद् भवाम्बोधिं भक्तिनाविकचोदितः[३] ।।**

यथा करस्थितो जाज्वल्यमानदीपः प्रकाशते, तथैव वीरशैवाभिधे मते दीपवत् प्रकाशो लभ्यते। अस्मिन् मते यः कुमार्गेणाऽनाचारेण व्रजेद्यदि, सो निर्गतलोचनः सन् अन्धो भवति। वीरशैवमतं नाम स्वच्छवज्रनावाधिष्ठितो भक्तोः भवसागरं सुखरूपेण तरति। यथा भक्तिरूपनाविकस्य सहायेन सुखपूर्वकं भवसमुद्रस्य पारं तरति, अर्थात् भक्त्या भवाम्बुधिं निरायासेन तरति। इदमेव वीरशैवमतस्य महत्त्वपूर्णं वैशिष्ट्यं विद्यते।

पारमेश्वरागमे वीरशैवमाहात्म्यमधिकतरं वर्णितमस्ति। वीरशैवायोपदिश्यमानः षडक्षरमन्त्रोऽपि महान् शक्तियुक्तो वर्तते। तदुक्तम्—

**सप्तकोटिमहामन्त्रैरुपमन्त्रैरनेकशः[४] ।**
**मन्त्रः षडक्षरोऽभिन्नं सूत्रं वृत्त्यात्मनो यथा ।।**
**षडक्षरमयं देवं मां तु यो जपते भुवि ।**
**तस्य मुक्तिः करस्था स्याद् वीरशैवमतस्य च[५] ।।**

षडक्षरमन्त्रं हृदि स्मरतो वीरशैवस्य मुक्तिः करस्थैव भवति। अस्मिन्नागमे

१. पा. आ., ९.५३ ; २. तत्रैव, ९.५७।
३. तत्रैव, ७४-७५ ; ४. तत्रैव, ।
५. पा. आ.।

द्वादशपटले वीरशैवस्य नैष्ठिकः, अत्याश्रमी, महामाहेश्वरः, तपःश्रेष्ठ, महाव्रती, कृतकृत्यः, लिङ्गाङ्गी-इत्यादीनि पर्यायनामानि पठितानि। त एव श्रेष्ठा इति शिवेन वर्णितम्। अतः परं वीरशैवमाहात्म्यं किमु वक्तव्यं स्यात्? तथापि वीरशैवमहात्म्यरूपं सारं शृणोतु-

**क्रिमिकीटपतङ्गेभ्यः पशवः प्रज्ञयाधिकाः।**
**पशुभ्योऽपि नराः श्रेष्ठास्तेषु श्रेष्ठा द्विजातयः।।**
**द्विजातिष्वधिका विप्रा विप्रेषु कृतबुद्धयः।**
**कृतबुद्धिषु कर्तारस्तेभ्यः संन्यासिनोऽधिकाः।।**
**तेषु विज्ञानिनः श्रेष्ठास्तेषु शङ्करपूजकाः।**
**तेषु श्रेष्ठा महादेवि मम लिङ्गाङ्गसङ्गिनः[1] ।।** इति।

।। नमोऽस्तु लिङ्गाङ्गसङ्गिभ्यः ।।



## ग्रन्थऋणम्

१. शक्तिविशिष्टाद्वैततत्त्वत्रयविमर्शः, डॉ. चन्द्रशेखर शिवाचार्य स्वामी जी जङ्गमवाड़ी मठ, वाराणसी।
२. पारमेश्वरागमः, सं. व्रजवल्लभद्विवेदः-प्रकाशकः जङ्गमवाड़ी मठ, वाराणसी
३. मकुटागमः, ,, ,, ,, ,, ,,
४. शिवागम सौरभ (कन्नड) सं. डा. ज.च.नि. बेंगलूर
५. सुभाषितरत्नभाण्डागारम्, निर्णयसागरप्रेस, मुंबई
६. वीरशैवस्य जननं प्रसारम् (कन्नड), प्रो शि शि बसवनाक धारवाड
७. शङ्करसंहिता, सोल्लापुरवारदप्रकटिता
८. सिद्धान्तशिखामणिः, सं. काशीनाथशास्त्री नागनूर बृहन्मठ
९. शिवयोगप्रदीपिका, चन्नसदाशिवयोगीन्द्रविरचिता
१०. विशेषार्थप्रकाशिका, मोग्गेयमायिदेवविरचिता
११. शिवानन्दलहरी, शङ्कराचार्यकृता

---

१. पारमेश्वरागमे

# वीरशैवमत में दीक्षाविधान

*पं. जनार्दन पाण्डेय*

भारतीय संस्कृति में श्रुति दो प्रकार कही गयी है— वैदिकी और तान्त्रिकी। जैसा कि मनुस्मृति के टीकाकार कुल्लूक भट्ट ने लिखा है **"श्रुतिर्द्विधा वैदिकी तान्त्रिकी च"**। वैदिक कर्मकाण्ड तो प्रसिद्ध ही है। गर्भाधान से लेकर मृत्यु पर्यन्त सभी संस्कार वैदिक विधि से होते हैं। इनसे आत्मशुद्धि होकर व्यक्ति मानवजीवन के चरम लक्ष्य मुक्ति या मोक्ष को प्राप्त करता है, किन्तु वह सबके लिये सम्भव नहीं है और मुक्ति की कामना सबको होती है। इसलिये सर्वसाधारण के लिये तान्त्रिकी विधि का विधान है। शैवदर्शन भी प्राय: इसी का अनुसरण करता है, किन्तु उसके कर्मकाण्ड में वैदिक विधानों का पर्याप्त प्रभाव दीखता है।

आगम या तन्त्रशास्त्र के प्रतिपाद्य विषयों में दीक्षा एक अत्यन्त महत्त्वपूर्ण विषय है। प्राय: सभी धर्मों, सम्प्रदायों का दीक्षा एक अनिवार्य अङ्ग है। हाँ, उसका स्वरूप भिन्न हो सकता है। उससे सम्बद्ध विस्तृत साहित्य प्राप्त होता है। प्रस्तुत निबन्ध में वीरशैव मत में दीक्षा के स्वरूप पर संक्षेप में विचार किया गया है।

## शैवों के सात प्रकार

शैवों के सात प्रकार बताये गये हैं–१. अनादि शैव, २. आदि शैव, ३. अनुशैव, ४. महाशैव, ५. योगशैव, ६. ज्ञानशैव और ७. वीरशैव। अनादिशैव कर्म को, आदिशैव भगवत्स्मरण को, अनुशैव मनन को, महाशैव परम गति को, योगशैव अष्टाङ्ग योग को, ज्ञानशैव ज्ञान की भावना को मुक्ति का साधन मानता है; किन्तु वीरशैव ज्ञान और योग दोनों को साधन मानता है, उसका कहना है कि ज्ञान के बिना योग और योग के बिना ज्ञान सिद्ध नहीं हो सकता। अत: वीरशैव मत सर्वश्रेष्ठ है। पारमेश्वरागम के सप्तम पटल में इस विषय का विस्तृत वर्णन मिलता है।

वीरशैव शब्द की परिभाषा इस प्रकार की गई है–

**'वी' शब्देनोच्यते विद्या शिवजीवैक्यबोधिका।**
**तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः॥**

अर्थात् शारीरिक पौरुष में नहीं, शिवभक्ति में वीरता दिखाने के कारण ये वीर-शैव कहे जाते हैं। इन सातों शैवों का दीक्षाविधान सोपान क्रम से होता है।

## दीक्षा

दीक्ष् धातु संस्कार अर्थ में प्रयुक्त होता है, इसी से दीक्षा शब्द बनता है, संसार का प्रत्येक मानव दु:ख की निवृत्ति और सुख की प्राप्ति चाहता है, वह सुख ऐहलौकिक हो या पारलौकिक या परमसुख (मुक्ति), उसके लिये उसे परमात्मा के किसी स्वरूप की इष्टदेवता के रूप में भावना करके साधना करनी पड़ती है। वह साधना तभी कर सकता है, जब उसकी आत्मा शुद्ध हो। आचार्य क्षेमराज ने लिखा है–''**आत्मसंस्कार एव दीक्षा**''। अर्थात् आणव, कार्म और मायिक मलों से आवृत आत्मा को उनसे रहित करना ही दीक्षा का उद्देश्य है। इसीलिये आगमशास्त्रों ने दीक्षा की परिभाषा इस प्रकार की है–

**दीयते ज्ञानसद्भाव: क्षीयते पशुवासना।**
**दानक्षपणसंयुक्ता दीक्षा तेनैव कीर्तिता।।**

यह दीक्षा तीन प्रकार की होती है–वेधा, मान्त्री और क्रियादीक्षा।

### १. वेधा दीक्षा

इसमें गुरु अपने दाहिने हाथ को षडक्षर मन्त्र से ६ बार अभिमन्त्रित कर, उसमें शिव के हाथ की भावना करके शिष्य के मस्तक पर रखता है और एकटक दृष्टि से उसे देखता है। इसमें सात प्रकार के उपदेशात्मक संस्कार होते हैं, जो अभय, नि:संसार, निर्वाण, तत्त्व, अध्यात्म, तत्त्वविशोधन और तत्त्वबोधन नाम से जाने जाते हैं। इस दीक्षा से शिष्य के आणव मल की निवृत्ति हो जाती है और उसमें **'शिवोऽहम्'** की भावना जागृत होती है।

महामाहेश्वराचार्य अभिनवगुप्त ने तन्त्रालोक के १९वें आह्निक में इस पर विशेष विचार किया है। उनके अनुसार गुरु जब शिष्य के मस्तक पर हाथ रखकर उसपर अनुग्रह दृष्टि डालता है, तो शिष्य की प्राणशक्ति का उत्थान, आरोह-अवरोह की गति तथा षट्चक्रों का शोषण-दाहन-आप्यायन-सकलीकरण आदि क्रियाएँ अनायास होने लगती हैं। उन्होंने इसके ६ भेद बताये हैं—मन्त्र, नाद, बिन्दु, शाक्त, भुजग और परवेध। इसके अतिरिक्त उन्होंने तुलादीक्षा और योजनिका दीक्षा ये दो भेद और भी बताये हैं।

**२. मान्त्री दीक्षा**

इस दीक्षा में गुरु शिष्य के दाहिने कान में पञ्चाक्षर महामन्त्र का उपदेश देता है। इसमें भी सात प्रकार के उपदेशात्मक संस्कार होते हैं–चित्तैकाग्रता, दृढ़व्रतत्व, पञ्चेन्द्रियार्पणा, अहिंसा, लिङ्गनिष्ठा, लिङ्गमनोलय और सद्योमुक्ति। इस सप्तविध दीक्षा से शिष्य के मायीय मल की निवृत्ति होती है और **'चिद्रूपोऽहम्'** की भावना उद्बुद्ध होती है।

**३. क्रिया दीक्षा**

इस दीक्षा में मण्डप बनाकर उसके बीच में पञ्चकोण बनाया जाता है। उसके पाँचों कोणों में पञ्चाक्षर महामन्त्र का एक एक अक्षर लिखकर उनपर पाँच कलश स्थापित किये जाते हैं, जो शैवधर्म के आदि प्रवर्तक पञ्चाचार्यों (रेवणसिद्ध, मरुलसिद्ध, एकोराम, पण्डिताराध्य और विश्वाराध्य) के प्रतीक माने जाते हैं। इस प्रक्रिया में पूरा कर्मकाण्ड हवन आदि प्रायः वैदिक विधि की तरह ही होता है और अन्त में उन कलशों के जल से शिष्य का अभिषेक किया जाता है। इस दीक्षा से शिष्य के कार्मिक मल की निवृत्ति होती है तथा इसमें भी सात प्रकार के उपदेशात्मक संस्कार होते हैं, जो–आज्ञा दीक्षा, उपमा दीक्षा, क़लशाभिषेक, स्वस्तिकारोहण, भूतिपट्ट, आयत्त और स्वायत्त नाम से जाने जाते हैं।

कारणागम में दीक्षा विषय पर विस्तृत विवरण दिया गया है। पारमेश्वरागम के द्वितीय पटल में दीक्षा का केवल उपक्रम दिया है। दीक्षा कब लेनी चाहिये, गुरु शिष्य कैसे होने चाहिये आदि। तीसरे पटल से सातवें पटल तक की पुष्पिकाओं में 'दीक्षा प्रकरणे' कहा गया है, किन्तु इसमें क्रिया दीक्षा का ही वर्णन है, क्योंकि इसका प्रारम्भ ही मण्डप निर्माण से होता है। आगे दीक्षा का क्रम और दीक्षोपयोगी उपकरणों का विधान है। चतुर्थ पटल में दीक्षाङ्ग होम की प्रक्रिया बताई गई है। पञ्चम पटल में लिङ्गग्रहण दीक्षा का विधान है, सप्तम में सात प्रकार के शैवों के लक्षण और वीरशैव की श्रेष्ठता का वर्णन है। आगे चलकर बीसवें पटल में दीक्षा के विशेष प्रकार बताये हैं। इनमें अनादि शैव से ज्ञान शैव तक के ६ प्रकार के शैवों के लिये एक कलश वाली दीक्षा का विधान है। वीरशैवों के तीन भेद किये हैं–सामान्य वीरशैव, विशेष वीरशैव और निराभारी (तुर्य) वीरशैव। इनमें सामान्य और विशेष के लिये तीन कलशवाली तथा निराभारी के लिये पाँच कलशवाली दीक्षा का विधान है। निराभारी (तुर्य) वीरशैव नित्य और नैमित्तिक कार्यों को केवल कर्तव्य बुद्धि से करता है। फल की अभिलाषा से काम्य कर्म कभी नहीं करता, अतः वह सर्वश्रेष्ठ है।

वीरशैवों के लिये लिङ्गधारण अनिवार्य है और जब तक दीक्षा नहीं होती, तब तक कोई लिङ्गधारण का अधिकारी नहीं होता। इसीलिये जैसे वैदिक विधि में ब्राह्मण के लिये ८वें वर्ष में, क्षत्रिय के लिये ११वें वर्ष में गायत्री दीक्षा लेना (उपनयन) आवश्यक है, वैसे ही वीरशैवों के लिये भी आठवें वर्ष में पञ्चाक्षर मन्त्र की दीक्षा लेना अनिवार्य है। चूँकि संसार के सभी जीव शिव के ही अंश हैं, अत: इस दीक्षा में किसी प्रकार का जातिभेद या लिङ्गभेद नहीं माना जाता।

दीक्षित व्यक्ति ही शिवयोग की साधना करके मुक्ति को प्राप्त कर सकता है।

# Linga-worship in Vīra-Śaivism

*Dr. Rama Ghose*

Āgama and Nigama are the vast, unfathomable treasures of the Indian Religion and Philosophy. Sanskrit lexicon 'Nighantu' names the Veda as 'Nigama' and Tantra as 'Āgama' and hence both have been regarded under a common caption as 'Śruti'. Śruti denotes both Veda and Tantra, the two parallel stream of expressions of the nature of Reality and the means to achieve the one and the same goal, though adopting a different approach of their own. The syllable 'Ā' denotes that which is originated, 'ga' signifies 'falling' i.e. falling to the Goddess Pārvatī and 'ma' means the religion or the doctrine for the devotee. It is the exposition of divine knowledge, and the way to attain it through the prescribed procedures and meditation along with the hymns. According to Pauṣkar Āgama, there are ten Śaivāgamas and eighteen Rudrāgamas recognised as Siddhāntāgama. Kāmika, Yogaja, Cintya, Kāraṇa, Ajit, Sudīpta, Sūkṣma, Sahasra, Suprabheda, Śiva and Vijaya, Pārameśvara, Nihśvāsa, Prodgīta, Mukhabimba, Siddhamat, Santāna, Nārasiṁha, Candrahāsa, Bhadra, Svāyambhuva, Viraja, Raurava, Mukuṭa, Kiraṇa, Lalita, Āgneya and Parākhya are the ten Śaivāgamas and the eighteen Rudrāgamas respectively manifested by Lord Śiva. This has been stated in Kiraṇāgama and Śrikaṇtha-saṁhitā that though the knowledge by itself is undivided and indivisible but Paramaśiva, the omniscient ultimate Reality, out of compassion for the welfare of the world, manifested this eternal knowledge primarily to the ten Śivas and eighteen Rudras for the purpose of revealing it to the empirical world through the divinities and ṛṣis. It is pertinent to note here that the Vedas also represent indivisible eternal knowledge which is revealed to the ṛṣis in a state of spiritual trance of deep meditation.

Pārameśvarāgama, as stated above is one of the famous Rudrāgamas revealed as the discourse between the God (Śiva) and Goddess (Pārvatī). This Āgama often follows the Vedic tradition

along with the Āgamic approach, such as, Tapa, Karma, Japa, Dhyāna and Jñāna (penance, action, repetition of hymn, meditation and knowledge) have been regarded as five-fold Yajña named as Pāśupata-vṛata (Pāśupata discipline) in the Vāyavīya Saṁhitā of Śiva-Mahāpurāṇa. Sūkṣmāgma and Pārameśvarāgama describe the above mentioned discipline which have again been stated in Siddhānta Śikhāmaṇi (9.21-24). Pañcasūtraliṅga, Prasāda, Pañcākṣara, Pañcānuvāk, Rudrādhyāya, Rudraikādaśinī, Aṣṭabandha, Tuti, Dhyāna etc. are the significant concepts that have duly been explained along with prescribed procedures and hymns. Regarding the observance of various spiritual disciplines, Pārameśvarāgama maintains a broad view of recognition of dignity and utility of each and every discipline.

The special feature of Vīra Śaivism, otherwise named as Liṅgāyat Śaivism, is the procedure of worshipping Iṣṭaliṅga on the palm of the left hand. It is called कर पंकज पीठ– the lotus palm–seat. Iṣṭaliṅga is installed in the middle of the palm of the left hand, then the worship is being performed with prescribed procedure. This palm-seat is the imparter of the four Puruṣārthas–Dharma, Artha, Kāma, Mokṣa. Here is a short discussion about the various seats and their relative results as advocated by Pārameśvarāgama.

The seat made of stone bestows son and wealth, of iron accords all kinds of attainments, of clothes provides all kinds of good results and the seat made of leaves grants gold. But the seat made of wood, earth, leather, blanket and grass cause various kinds of suffering and disturbances. Lotus palm is considered to be the supreme.

**तत्र सर्वोत्तमं देवि पीठार्थं करपङ्कजम् ।।**

Pārameśvarāgama, 16.13

Devotee should contemplate the five fingers as five petals, the middle of the palm as the centre of the lotus and the lines as the pollen. He should also contemplate the five fingers as the five forms of Śiva (Iśāna etc.). The centre of the palm is to be meditated as the Goddess Pārvatī. Five fingers starting from the thumb to the little finger gradually are named as गार्हपत्य, दक्षिणाग्नि, आहवनीय, सभ्य, आवसथ्य। Indra etc. eight protector's are to be contemplated on eight directions. Starting from the east four goddesses, namely, Durgā, Māheśvarī, Caṇḍi, Bhadrakālī are to be meditated upon the four directions. Devo-

tee should imagine the encircling four directions and Gaṇeśa. Baṭuka, Vīrbhadra and Caṇḍa should be meditated upon. Nandīśa, Riti, Bṛṅgī and Tuṇḍi are the four names of the nāyakas i.e. courtiers and they are to be contemplated in Āgneya Riti in Īśāna, Bhṛṅgi in Nairṭya, Tuṇḍi in Vāyavīya directions. Mountains like Śri Śailam, rivers like Gaṅgā, Kalpa tree, gem Cintāmaṇi, Kāmadhenu, four Vedas and Purāṇas, Sāṅkhya-yoga philosophies, Dharma śāstras–all these auspicious and pure things are to be contemplated and the Iṣṭaliṅga is to be worshipped in the middle of It. Starting from the elbow to the wrist which is like a stem of the lotus on which five faced Lord is to be meditated upon. The glory of Lotus-palm has been sung by the Lord Himself thus–

सर्वसौभाग्यजनकं यत्पीठं करपङ्कजम् ।।

Pārameśvarāgama, 13.30

करपङ्कजपूजायां तत् सर्वं साङ्गमेव हि ।।

Pārameśvarāgama, 13.31

Proper procedure for the worship of Iṣṭaliṅga has been described by Lord himself. Contemplating the aforesaid auspicious things on the lotus-palm, Iṣṭaliṅga is to be installed within and worship should be performed with the oblation etc. to the best of capacity reciting the Pañcākṣara hymn in a sitting position till the completion of the worship. Devotee should contemplate the Iṣṭaliṅga as immanent in the whole universe being without beginning, middle and end. Because of the intense devotion of the worshipper and the Grace of God, It (God) resides on his lotus-palm-seat.

लिङ्गं विश्वात्मकं ध्यायेदादिमध्यान्तवर्जितम् ।
भक्तेच्छावशतो भक्तपाणिपङ्कजसंस्थितम् ।।

Pārameśvarāgama, 13.43

It has been said by Lord that performance of ablution with intense devotion is superior to the ablution by the water of the oceans.

सहस्त्रप्रसृतिर्देवि सहस्त्रघटसम्मिता ।
मम लिङ्गाभिषेकार्थे पुनर्भावनयाऽब्धयः ।।

Pārameśvarāgama, 13.50

